Paramartha Series' Volume III.

'तस्मै सर्वात्मने नमः

# अधिकरणरत्नमाला

## परमार्थदर्शनीया

### सवार्तिका



रामावतारशर्मणा प्रणीता प्रकाशिता च ।



काश्याम्

महामण्डलशास्त्रप्रकाशकसमितियन्त्रे

श्रीअम्बिकाचरणचक्रवर्त्ती द्वारा मुद्रिता ।

सन् १९१३ ई०

मूल्यम् १)

# शुद्धिपत्रम् ।



| शुद्धम् | अशुद्धम् | पृ० | प० |
| --- | --- | --- | --- |
| मानम | मनम् | ८ | ६ |
| चाद्रुत | चाद्रुतं | १२ | ५ |
| दृष्टि | दृष्टि | १० | १३ |
| ज्ञात | ज्ञाता | २१ | २ |
| प्राकृता | प्रकृता | २१ | १८ |
| दर्स्ति | दर्म्य | २३ | १ |
| अनेन | अघेन | २८ | १९ |
| सतेपा | सतपा | ३० | १३ |
| हुना | हूला | ३१ | २ |
| विप्रकर्ष: | विप्रकष: | ३५ | ७ |
| जीव | जय | ४१ | १ |
| त्रुध | त्रुध | ४१ | १२ |
| मंत्रि | मन | ४३ | १२ |
| मोर | सार | ४३ | १९ |
| वता | चता | ४५ | १४ |
| विसर्ग | विसर्ग | ५० | ११ |
| पीता | पाता | ५१ | ३ |

| शुद्ध | | अशुद्ध | | पृ० | | प० |
|---|---|---|---|---|---|---|
| जननी | ... | जनी | ... | ५३ | ... | ६ |
| वधू | ... | धधू | — | ५३ | ... | २० |
| सिद्धो | ... | सिद्धा | ... | ५५ | ... | ९ |
| चापि | ... | चांपि | ... | ६० | ... | ९ |
| याखिलं | ... | आखिल | ... | ६१ | ... | १३ |
| सत्य | ... | सत | ... | ६६ | ... | ४ |
| मधु | ... | वसु | ... | ६६ | ... | १८ |
| योगी | ... | योग | ... | ७४ | ... | ४ |
| धर्म | ... | मेध | ... | ७५ | ... | २२ |
| ध्यस | ... | ध्यास | ... | ७६ | ... | ६ |
| दृष्टा | ... | दृस्टा | ... | ८२ | ... | ८ |
| ग्राम्येषु | ... | गाम्यषु | ... | ८३ | .. | १४ |
| श्रेष्ठा | ... | श्रेष्ठया | ... | ८६ | ... | २ |
| त्यं | ... | तं | ... | ९४ | ... | १० |
| प्रमातृन् | ... | प्रमातन् | ... | १०६ | ... | २२ |
| न वा, | ... | न वा | ... | १२५ | ... | ५ |
| पूर्व | ... | पूव | ... | १३१ | ... | ३ |



# अधिकरणरत्नमाला परमार्थदर्शनीया
## सवार्तिका ।

——:o:——

अमेयाद्दर्शनाम्भोधेरुच्चितैरर्थमौक्तिकैः ।
परमार्थाधिकरण-रत्नमाला विधीयते ॥ १ ॥

प्रथमाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति-

दर्शनं सार्थकमिदमथवा स्यान्निरर्थकम् ।
सत्त्वाद्बहूनां शास्त्राणां नैतस्यार्थो विभाव्यते ॥ १ ॥

---

वार्तिकानि-

उपक्रमः

कुत्र केन लिखितं किमित्ययं नाममात्रविदुषां दुराग्रहः ।
वस्तु काऽत्र गीति वस्तुनिस्पृहेऽन्वेषणं तु परमार्थदर्शने ॥ १ ॥
प्राच्यमार्यभटजीवितावधि प्रत्यगप्यथ कुमारिलोदयम् ।
अप्रमत्तविदुषां यथायथं दर्शितं मतमिहापरं विना ॥ २ ॥
भट्टवल्लभमुखैरनाग्रहैः सुक्रतुप्रभृतिभिश्च तत्परैः ।
व्याहृतिप्रणयशून्यमीरितं संगृहीतमिह तत्प्रयत्नतः ॥ ३ ॥
दैवशब्दकलिदिव्यशक्तिभिः ख्यापिताभिरिह धूर्तकामिभिः ।
वञ्च्यते न परमार्थधीर्जने तां पुनर्जनयितुं यतामहे ॥ ४ ॥
शास्त्रभारनतकन्धरा अपि व्याहृतिप्रणयिनो विपश्चितः ।
नान्तुकेन परमार्थतत्त्वपान्कर्तुमेव विपुलः परिश्रमः ॥ ५ ॥
शिल्पशास्त्रपयसा सरस्वतीं कामधेनुमिव विश्वतोऽभिधीम् ।
तामुपास्य कितवप्रतारणां पोषिणीमिव निषेवते जनः ॥ ६ ॥

संग्रहश्च विवेकश्च व्यवस्थानाप्रहस्तथा ।
सद्योगाभ्युदयौ चास्य दर्शनस्य प्रयोजनम् ॥ २ ॥
सूत्रम्—अथ परमार्थानुशासनम् । १।१।१।

---

(अ० १) पादुकाभ्यां विपद्याशा मस्करी वज्रवस्करः ।
भुजङ्गाजगरो रामः सतोर्नाधिस्तनूनपात् ॥ ७ ॥
भल्लाकारो हरिर्दृष्टः केशः सर्पत्वमाप्तवान् ।
निर्विघ्नः सर्वविद्दृष्टो भिक्षुश्चैवेष्टवृष्टिकृत् ॥ ८ ॥
हुङ्कारैर्मारणं सद्यो वयसैर्हेमतापसः ।
सर्पैर्निर्वापनयनं जपेन च वशीक्रिया ॥ ९ ॥
सेवकसाधनया वश्या नित्याक्षो ज्ञानसंक्रमः ।
विद्यावाप्तिश्च प्रजोत्पत्तिर्धनाप्तिश्च प्रसादतः ॥ १० ॥
दुग्धं वायोर्घृतं नद्या मेदत्वं व्यभिचारिणा ।
कुबेरैर्वर्चिकित्सा च लयो जन्तोः शिलासु ॥ ११ ॥
जन्मादृल्लिखनं वध्वाः प्रस्थाने शकुनात्फलम् ।
जातिस्मरत्वं बालानां ध्याने देवैश्च भाषणम् ॥ १२ ॥
ईदृशा विषयाः स्पष्टं व्याहता दृष्टिशालिनाम् ।
अभ्यासानुसंधानसदसोन्वेष्यतां गताः ॥ १३ ॥
जले स्थले च वायौ च वाष्पनौकादिभिर्गमः ।
विदुषां सेवनं नित्यं शिल्पशास्त्राद्यवेक्षणम् ॥ १४ ॥
शरीरक्षेटनं स्वार्थे त्यागः सर्वज्ञमानिनाम् ।
विषव्याधिव्रणादीनां सद्विधिभिश्चिकित्सनम् ॥ १५ ॥

तृतीयाधिकरणमारचयति–

प्रमाणमस्ति वा नास्ति, नास्ति सर्वविरोधतः ।
अर्थोऽस्ति परिणामेऽपि प्रमाणत्रयगोचरः ॥ १ ॥
प्रत्यक्षमनुमानं च तथाप्तोक्तेति तत्त्रयम् ।
तस्मात्प्रमाणमस्त्येव सहकारि परस्परम् ॥ २ ॥

भूतादौ प्रत्ययाभावः स्वोद्योगस्यावलम्बनम् ।
अन्यथाल्पवणज्ञानं भक्तिरात्मेष्टहेतुका ॥ १६ ॥
वीराद्यं गन्धर्वाणां बुद्ध्याराधनं तथा ।
सर्वत्र कार्यसंबद्ध-कारणान्वेषणे श्रमः ॥ १७ ॥
प्रत्यादेशो व्याहतानामव्याहतपरीक्षणम् ।
वृद्धा त्रिधया दृष्टाः परमार्थानुसारिणाम् ॥ १८ ॥
(प्र० २) प्रत्यक्षेणानुमानेनाबाधेनाप्तोक्तयापि वा ।
यो ज्ञापितः सदर्थः परमार्थ इति स्थितिः ॥ १९ ॥
यः प्रत्यक्षोपलम्भेनानुमितार्थेन वा पुनः ।
व्याहतोऽपरमार्थः स प्रहेयः पारमार्थिकैः ॥ २० ॥
प्रत्यक्षे चानुमाने च कदाचिद्बाधसंभवः ।
तस्मात्तु नाप्तवाचोऽन्यत्प्रमाणं भवितुं क्षमम् ॥ २१ ॥
चरणाभ्यां प्रचरतः सति स्खलनसंभवे ।
कः पुनर्नामया गन्तुमनुन्मत्तोऽध्यवस्यति ॥ २२ ॥
पश्यन्स्पृशन्गजाश्वादीन्को वा मन्येत मायिकान् ।
व्याहतान्वा पिशाचादीन्गणयेत्पारमार्थिकान् ॥ २३ ॥

सूत्राणि–अव्याहृत: पुत्रवतीपुत्रसम: परमार्थस्तद्वन्ध्यो वन्ध्यापुत्रसम: १।१।२ परमार्थ: प्रत्यक्षानुमानाभ्यामबाधिताभ्या-माप्ताज्ञया च निर्णीतार्थया ।१।१।३ व्याहृतिर्बाधः। १।१।४ विरोधोबाध इति निश्चयः ।१।१।५ तानि त्रीणि प्रमाणानि प्रसिद्धानि ।१।१।६ प्रमाणविशेषाणामंशमात्रावगाहिनां विषयविभागो विरोधा-भाव: सहकारित्वं च॥ १।१।७।

---

शाखो रश्मिगृहीतो हि वायुभूत: पलायते ।
न वा प्रेत: पिता पिण्ड भक्षणार्थीति देहभृत् ॥ २४ ॥
आज्ञानुष्ठीयते पुत्रै: पितॄणां जीवतां यथा ।
मृतेष्वपि तदादेशाचिवापो ननु तृप्तये ॥ २५ ॥
यथाह्निकानां मध्यादि-तरणं फलमुच्यते ।
तथैवातिशयोक्त्यैव तृप्तिमाहुर्निवापजाम् ॥ २६ ॥
य: स्वर्गैश्वर्यादिलोभेन निरयेभ्यो भयेन वा ।
भूतप्रेतपिशाचादि-तृप्तये वा विमूढधी: ॥ २७ ॥
धर्मं करोति तत्तस्य वाणिज्यं नैव धर्मधी: ।
वेश्यावल्लोभनैनैव निरयेभ्यो भयैर्न वा ॥ २८ ॥
धर्माचिचार्यते यस्तु निर्हेतुर्यस्य धर्मधी: ।
तस्य ज्ञानं तपस्तस्य स धर्मात्मा स बुद्धिमान् ॥ २९ ॥
जीवतां वा मृतानां वा सफला निष्फलापि वा ।
कार्यैवाज्ञेति बुद्धिर्हि चार्वाकमुखमुद्रणी ॥ ३० ॥

तृतीयाधिकरणमारचयति–

प्रत्यक्षं संनिकृष्टांशे विप्रकृष्टेपि वा भवेत् ।
संभवेद्विप्रकृष्टेपि योग्यादीनां जनभ्रुते: ॥ १ ॥

---

भूतप्रेतपिशाचादि-स्थितौ मानं न दृश्यते ।
सत्त्वेपि तान्वा कः प्राज्ञः कुटुम्बोपेक्षया भजेत् ॥ ३१ ॥
पूर्वजानामधीनां तु निवापादिविधिर्यतः ।
विधिरस्त्येव कार्यः स तत्र मानान्तरेण किम् ॥ ३२ ॥
ये धार्मिकभयादेव चौर्यं नैव प्रकुर्वते ।
चार्वाकास्ते न कुर्वन्तु विधीन्दण्डभयोज्झिताः ॥ ३३ ॥
ये रक्षिणामभावेपि नैव चौर्यादि कुर्वते ।
धर्मभक्त्यैव सभ्यास्ते कुर्युर्निर्हेतुकान्विधीन् ॥ ३४ ॥
यत्कदाप्यस्ति तत्सर्वं घटस्यैव विनिश्चयः ।
क्षणिकत्वं स्थिरत्वं वा सत्तायामप्रयोजकम् ॥ ३५ ॥
कल्पस्थायी गिरिः सत्यः क्षणार्धायी ऊर्मिजं सत् ।
प्रेक्षावतामयं भेदो न जातु हृदयंगमः ॥ ३६ ॥
न पाटलिपुरं क्वाद्यं न वा पाटलिपत्तने ।
विलोपमीदृशं पश्यन्कः शून्यपुरमावसेत् ॥ ३७ ॥
चिन्तुष्यमानं वैचित्र्यं वैचित्र्यान्तर भासते ।
पश्यंस्तथैव को ब्रूयात् निर्वैचित्र्यं प्रपद्यताम् ॥ ३८ ॥
प्रत्यक्षं चानुमानं च तथाप्राप्नोति तद्द्वयम् ।
विभक्तविषयं सिद्धं प्रमाणं नास्यतः परम् ॥ ३९ ॥

ज्ञानेन्द्रियाद्यतिशयात्संनिकर्षवति स्फुटम् ।
प्रत्यक्षं विप्रकृष्टे तु वन्ध्यापुत्रायितं ध्रुवम् ॥ २ ॥

सूत्रे-संनिकृष्टांशे सोपलम्भयन्त्रादिमज्ज्ञानं प्रत्यक्षम् । १।१८
संनिकर्षो ज्ञानेन्द्रियविषयविशेषापेक्षः । १।१९ ॥

चतुर्थाधिकरणमारचयति-

उपलम्भः सहायादेरुत्कर्षाद्बाध्यते न वा ।
तस्य बाधो मुहुर्दृष्टः पृथिव्याः स्थिरतादिके ॥ १ ॥
अप्रमत्तोपलम्भस्य न बाधो दृश्यते क्वचित् ।
साध्वीयस्ता सहायादेरुत्कर्षात्संभवत्यलम् ॥ २ ॥

---

(पृ० ३) प्रत्यक्षं संनिकृष्टांशे तद्भिन्नेऽनुमितिर्मता ।
इयं वस्तुनि तत्स्पष्टेऽनुष्ठेये तु विधेः प्रमा ॥ ४० ॥
तिथ्यर्क्षोपरागादि-कालं नो वेत्ति कश्चन ।
यन्त्रादिसंस्कारेण गणितान्ज्ञायते हि तत् ॥ ४१ ॥
यन्त्राद्यसंस्कारेण गणितेऽपि कृते महत् ।
होराशास्त्रादौ वैषम्यं तस्माद्यन्त्राद्यपेक्ष्यते ॥ ४२ ॥
(पृ० ४) नौकायां वाष्पयाने वा गच्छंस्तीरादि मन्यते ।
चलत्यतिमुखं प्रायः प्राज्ञोऽपि प्रथमं यथा ॥ ४३ ॥
तथा भुवि विसर्पन्त्यां परितो रविमण्डलम् ।
ताराद्युपेतमाकाशं भाति प्रतिमुखं व्रजत् ॥ ४४ ॥

सूत्राणि-सहायबुद्ध्याद्युत्कर्षात्साधुतरत्वं न बाधोऽप्रमत्तोपलम्भस्य ।१।१।१०। मरुमरीचिकायां रूपमात्रोपलम्भे स्मृतस्य रसादेराशा प्रमादः ।१।१।११। स दिग्भ्रम इवावधानमात्रसाध्यः ।१।१।१२॥

---

भूः स्थिरोत्पत्तिका यस्मात्सम्भवे सत्यपीदृशे ।
प्रामाणिकं स्थिरत्वं तदनुमित्याथ बाधितम् ॥ ४५ ॥
सति प्रमादादज्ञाते तदित्थं बाधसंभवे ।
निश्चयः संशयस्थाने बाध्येतेति किमद्भुतम् ॥ ४६ ॥
प्रत्यक्षं विप्रकृष्टाद्ये प्रमाणं नेत्यजानतः ।
ताराप्रकाशादिविज्ञानं नूनं प्रामादिकं भवेत् ॥ ४७ ॥
उपलभ्यामलं रूपं रसाशंसी मरीचिकाम् ।
अनुधावंश्च तत्तत्त्वं पश्चाद्यो विपद्यते ॥ ४८ ॥
अन्तर्हितागता यस्मात्कारे धूर्तेन दर्शिताम् ।
यो मुद्रां मन्त्रजां मत्वा मन्त्रं द्रव्याय साधयेत् ॥ ४९ ॥
कामशक्तिधनादीनां क्षयं कृत्वा स मूढधीः ।
किं चित्रं यद्विपद्येत मरौ हरिणको यथा ॥ ५० ॥
गोलाध्यायाऽभिज्ञोऽपि विपुले पत्तने यथा ।
दिङ्मूढो न विजानीयात्सुहृद्गेहस्थितिं जनः ॥ ५१ ॥
पदवाक्यप्रमाणादि-भारावनतकन्धरः ।
मन्त्रप्रेतान्यथासिद्धिं तथैव न विभावयेत् ॥ ५२ ॥

पञ्चमाधिकरणमारचयति–

प्रत्यक्षानुमयोः क्षेत्रे शब्दो मानं भवेन्न वा ।
शब्दो मानं भवेदेव नृणां विस्रम्भदर्शनात् ॥ १ ॥
शब्दस्य ज्ञापकत्वान्नास्त्यविधौ तु प्रमाणता ।
प्रत्यक्षं चानुमा चैव सिद्धार्थस्योपपत्तये ॥ २ ॥

सूत्राणि - असंनिकृष्टार्थेऽनुमनम् । १।१।१३ । द्वयमिदमविधौ १।१।१४ । तत्र शब्दः सहायो न तु प्रमाणम् । १।१।१५ ॥

षष्ठाधिकरणमारचयति–

विधेः स्वतो वा प्रामाण्यं परतो वा तदिष्यताम् ।
प्रत्यक्षादनुमानाच्च प्रामाण्यं दृश्यते विधेः ॥ १ ॥

---

प्रमादाख्यमहाव्याधेरवधानं हि भेषजम् ।
शास्त्रभाष्य ग्रहणं तच्छ्रुतिस्मृतिसमम् ॥ ५३ ॥
नृणां भुवि गतिं बोध्य यथा वायुगमानुमा ।
शब्दाद्द्रोणादिकं बोध्य तथा दृष्ट्याद्रूपानुमा ॥ ५४
अप्रमत्तस्य शास्त्रेषु सफलः स्यात्परिश्रमः ।
अन्यस्य आयानैष्फल्यं शास्त्रज्ञानं प्रमादिनः ॥ ५५ ॥
(अ० ५) प्रत्यक्षमनुमानं च परिनिष्ठितवस्तुगम् ।
यत्कार्यं पुरुषाधीनं विधेस्तत्र प्रमाणता ॥ ५६ ॥
(अ० ६) सद्योऽनुष्ठेयतात्पर्यात् निर्णीतार्थे विधौ स्वता ।
अर्थज्ञाने क्रियाभावोऽनाप्तस्याननुगम्यता ॥ ५७ ॥

स्वत आप्तविधेरन्न प्रामाण्यं परतो न तु ।
प्रत्यक्षस्यानुमायाश्च श्रवणाद्युपयोगिता ॥ २ ॥

सूत्रे—विधेस्त्वप्रमत्तेन श्रुतस्य स्मृतस्य चाप्तोक्तत्वे निर्णीतार्थत्वे च स्वत: प्रामाण्यम् १।१।१६। तत्र श्रवणादिमात्रोपयोगिनो प्रत्यक्षानुमाने १।१।१७ ॥

सप्तमाधिकरणमारचयति—

कादाचित्कमिहाप्तत्वं किं वा स्यात्सार्वकालिकम् ।
अङ्गीक्रियेत पित्रादेराप्तता सार्वकालिकी ॥ १ ॥
सर्वत्र रागद्वेषादि-हेतुर्व्याहतवादिता ।
सत्यां तस्यामनाप्तत्वमसत्यां पुनराप्तता ॥ २ ॥

सूत्रे—उपकारातिशयमूलकसंबन्धविशेषवानव्याहतवाद्याप्तो यथा पितरौ १।१।१८। व्याहतवादिता प्रमादादिजा विश्वसनीना १।१।१९ ॥

(प० ७) जनमानय वत्सेति विधेयाज्ञा पितुर्द्रुतम् ।
वसने त्वज्जलेऽङ्गारानानयेति स्तुपेक्ष्यते ॥ ५८ ॥
संबन्धेनन्यसामान्ये पितृत्वादिप्रयोजके ।
स्थितेऽपि व्याहता नाज्ञानुष्ठातुं शक्यते जनैः ॥ ५९ ॥
प्रमादरागद्वेषादि जन्या व्याहतवादिता ।
प्राज्ञेष्वपि च सत्येषु सर्वत्रैवोपलभ्यते ॥ ६० ॥
तस्मादव्याहतं यत्स्यात्स्वाक्यं वा सत्यमेव वा ।
तत्स्वीकार्यं परोक्षार्थे मिथ्यात्वं व्याहतं स्फुटम् ॥ ६१ ॥

सप्तमाधिकरणमारचयति–

परीक्ष्यं व्याहतं नो वा, परीक्ष्यं संशयोऽन्यथा ।
न परीक्ष्यं विनिर्णीत-व्याघातं शुद्धबुद्धिभिः ॥ १ ॥
एकांशदर्शनादेवाविवेकविकल्पैर्जनैः ।
व्याहतस्योपलम्भो हि प्राकाम्यादेः प्रघोष्यते ॥ २ ॥

सूत्राणि—व्याहतमपरीक्ष्यं तदुपलम्भस्य सर्वत्र प्रमाद-जत्वात् १।१।२० । सतोऽप्यतिकरस्य बाधितस्याप्येकांशदर्शनेन सुलभः प्रमादः १।१।२१ । सदृशो विपर्ययवादयोरर्थवादे च परीक्ष्यापरीक्ष्ययोरविवेकात् १।१।२२ ॥

---

(पृ० ८) यत्प्रत्यक्षोपलम्भेनानुमितार्थेन वा पुनः ।
प्रत्याहृतं तन्मिथ्यैव न तस्यानुगमः शुभः ॥ ६२ ॥
नगरं दर्शयामीति प्रतिज्ञाय यथा व्रजन् ।
अनेनानुगम्यते बालैर्न पुनः सरितं विशन् ॥ ६३ ॥
व्याकृतं पाठयामीति पाठयन्ननुगम्यते ।
मन्त्रसिद्ध्या भवेद्विज्ञ इत्युक्तो नमुपेक्ष्यते ॥ ६४ ॥
तथा सिद्धोऽस्मि भूतोऽपि च वदन्धूर्त उपेक्ष्यताम् ।
शिल्पशास्त्रमदृष्ट्वैवाननुगम्यः शुचिर्वदन् ॥ ६५ ॥
मूर्खाः सिद्धिविभूत्यर्थैरतिशोते विपश्चितः ।
पश्यन्तो महाशक्तीनं श्रद्धेयाः कथं चन ॥ ६६ ॥
शास्त्राभ्यासेन शिल्पेन सदुद्योगैस्तथा परैः ।
न भव्या सिद्धमूर्खाणां वास्तवी सिद्धिराप्यते ॥ ६७ ॥

नवमाधिकरणमारचयति-

प्रत्यक्षं मानसं नास्ति किंवास्ति, ननु नास्ति तत् ।
मनसो नेन्द्रियत्वं हि प्रत्यक्षं चेन्द्रियैरिह ॥ १ ॥
मनो मस्तिष्क नियतमुपलब्धृ स्फुटं च तत् ।
इन्द्रियं चोपलब्धृत्वात्तस्मात्स्मृत्यादि मानसम् ॥ २ ॥

---

महोद्योगैर्विपश्चिद्भिः शास्त्रशिल्पकलादिकम् ।
साधितं साध्यते चैव न धूर्तैः सिद्धनामभिः ॥ ६८ ॥
लोका मनुष्ययश्चैव विद्योद्योगपराङ्मुखाः ।
इच्छन्तो जनसंमानं सिद्धैः प्रख्यापयन्त्यमी ॥ ६९ ॥
जुगुप्समानाः संमानाद्ब्राह्मणा ब्रह्मवादिनः ।
शिल्पशास्त्रकलोद्योगैः सिद्धिं प्राप्नुवते पराम् ॥ ७० ॥
सिद्धेषु भक्त्या कल्याणं पापं तेषां परीक्षया ।
सिद्धमिथ्यकमूर्खानां परीक्षातोऽभयं ह्यभयम् ॥ ७१ ॥
शिल्पशास्त्रकलोद्योगे परीक्षा तु पदे पदे ।
पारमार्थिकसिद्धेभ्यः किं परीक्षातो भयं क्वचित् ॥ ७२ ॥
वन्ध्या भार्या ममेत्यद्य वदतो वस्मरात्परम् ।
एकपत्नीव्रतस्येमौ परिणेयौ सुतौ मम ॥ ७३ ॥
इति व्याख्याहता स्पष्टं व्याहृतिस्तु न लक्ष्यते ।
आद्यं विस्मरता वाक्यं लक्ष्यते स्मरतोऽभयम् ॥ ७४ ॥
विवेकं मारयन्धूर्तं भक्तं सर्पादि दर्शयन् ।
विद्याभावमभ्यस्यन्नियक्ष्यन्योऽलिलोऽवधेः ॥ ७५ ॥

सूत्राणि—प्रत्यक्षमदोषेन्द्रियोपलम्भः १।१।२३ । षड्विधमिन्द्रियाणां मनःषष्ठत्वात् १।१।२४ । तानि चक्षुःश्रोत्रत्वग्रसनघ्राणमस्तिष्कस्थानानि १।१।२५ । मानसं स्मृत्युत्प्रेक्षादि प्रसिद्धमन्यत् १।१।२६ ॥

---

भूतप्रेतपिशाचानां मन्त्राणां चाद्भुतं बलम् ।
भक्त्यैकगम्यं प्रख्याप्य प्रतारयति बालिशान् ॥ ७६ ॥
व्याहताव्याहताज्ञानाद्विध्यर्थविध्योश्च संकरात् ।
ज्ञानविज्ञानविद्विष्टो धूर्तानामेति वश्यताम् ॥ ७७ ॥
प्रामाण्यमविधौ नैव परिनिष्ठितवस्तुनि ।
शब्दस्येत्यविजानन्हि विमुह्यति मुहुर्मुहुः ॥ ७८ ॥
शब्दैरुक्तेप्यनुक्तेपि परिनिष्ठितवस्तुनि ।
प्रत्यक्षादनुमानाच्च तत्त्वातत्त्वविनिर्णयः ॥ ७९ ॥
वत्सानय फलानीति स्वाध्यायोऽध्येय इत्यपि ।
सद्यो हेत्वनपेक्षैव पित्राद्याज्ञा विधीयते ॥ ८० ॥
सुदूरा वाराणसीग्रामो गङ्गा पश्चिमवाहिनी ।
नापरोक्ष्योररीकार्यं कस्यापि वच ईदृशम् ॥ ८१ ॥
वन्ध्यापुत्रस्य शिरसि फलं स्थितमिहानय ।
ईदृशे तु परीक्षापि न कदाचित्प्रवर्त्यते ॥ ८२ ॥
(च० ६) एकेनैवेन्द्रियेणात्र यत्किंचिदुपलभ्यते ।
अनेकेन्द्रियसंवादात्तत्प्रत्यक्षं दृढं भवेत् ॥ ८३ ॥

दशमाधिकरणमारचयति-

अनुमानं प्रमाणं वा न वा, नास्य प्रमाणता ।
साहचर्यं न नियतं किं हि तत्र नियामकम् ॥ १ ॥
अंशांशिताऽत्र नियता तन्मूला चानुमा मता ।
तस्मात्प्रमाणमस्त्येवानुमानमिति निर्णयः ॥ २ ॥

सूत्राणि—अनुमानं प्रतिबद्धात्साधनात्साध्यग्रहः १।१।२७ । तादृशादंशादंशान्तरग्रहो वा १।१।२८ । द्विविधं सामान्यतो दृष्टं विशेषवच्च १।१।२९ ॥

---

चक्षुःश्रुतित्वग्रसन-घ्राणमस्तिष्कशक्तयः ।
इन्द्रियत्वेन विदितास्तत्प्रत्यक्षाणि षट् ततः ॥ ८ ॥
प्रत्यक्षात्मक एवासौ यः सर्वोऽपीन्द्रियग्रहः ।
संवादाशंसया दुष्यन्मषत्येव भ्रमात्मकः ॥ ८५ ॥

(अ०१०) व्याप्याद्व्यापकविज्ञानमनुमानमुदाहृतम् ।
व्याप्तिर्नियतसम्बन्धएकावयविनोंऽशयोः ॥ ८६ ॥
वह्नेर्हि धूम एकोंऽशः स्फुलिङ्गांशः परो मतः ।
अस्फुलिङ्गो न धूमः स्यात्स्फुलिङ्गः स्यादधूमकः ॥ ८७ ॥
तत्त्वेनावयविज्ञानमकृत्वा तार्किकाङ्कुराः ।
ब्रुवन्त्यवयविज्ञानं प्रत्यक्षमपरीक्षकाः ॥ ८८ ॥
आहुः प्रत्यक्षमंशानां तथैवांशान्तरानुमाम् ।
अनुमानस्य बीजं चावयवित्वं परीक्षकाः ॥ ८९ ॥

ब्रकाश्याधिकरणमारचयति—

लोकान्तरशिलाभाव-सिद्ध्यादेः संभवो न वा ।
संभवस्यानुमानं स्याद्वैचित्र्यस्याश्र दर्शनात् ॥ १ ॥
सामान्यदृष्टस्याज्ञाता विशेषा गुणलङ्घने ।
विप्लुवे मध्यमस्यापि व्याहृतौ च न संभवः ॥ २ ॥

---

अस्यावर्यावतस्वस्याज्ञानाच्चार्वाकवत्खरे ।
नावकाशोऽनुमानस्य प्रत्यक्षैकायनेभवत् ॥ १० ॥
अनुमानस्य का वार्ता प्रत्यक्षमपि विस्मरन् ।
ऋतमर्णवदाधातमणं कृत्वा घृतं पिबन् ॥ ११ ॥
धन्यश्चार्वाकशठो धन्यास्तस्यानुगामिनः ।
लोकायतं मतं चित्रं लोको न बहु मन्यते ॥ १२ ॥
मन्त्रान्मुद्रां स्त्रियं वायो योगिन्युद्भवनं तथा ।
रंचकत्वं वाच्ययाने धनवस्तुमुपार्जितः ॥ १३ ॥
सहवारान्परं चेदृक् स्वीकुर्यात्तार्किकाङ्कुरः ।
अज्ञोऽयपवित्रस्त्वस्य मुधा शास्त्रभरार्दितः ॥ १४ ॥
अकृत्रिमं कृत्रिमं च सर्वमेव सकर्तृकम् ।
अज्ञातहेतुकं सर्वं मन्त्रप्रेतादिहेतुकम् ॥ १५ ॥
इत्यादिकल्पनास्तर्कं भारनमग्निराभताम ।
सहचाराद्विदां व्याप्तेः मुच्यतामप्यगङ्गानाम् ॥ १६ ॥
यदि न ज्ञायते हेतु कल्प्यते व्याहृतः कथम् ।
अज्ञानबोधः साधीयान्विपरीतग्रहाग्मतः ॥ १७ ॥

सूत्राणि—सामान्यतो दृष्टे विशेषकल्पनं प्रमादः १।१।३० । संभवानुमानं तर्कः १।१।३१। स गुणविलङ्घने मध्यमाविपर्यासे च १।१।३२ । न प्रत्यक्षेण मुख्यकाभिव्याप्तिभिर्वा विरोधे १।१।३३।

द्वादशाधिकरणमारचयति—

ज्ञानमस्ति न वा, नास्ति विज्ञानेवसितं हि तत् ।
सर्वात्मनः स्वयं स्वेन ज्ञानमस्त्येव निश्चितम् ॥ १ ॥
द्रष्टृदृश्येन्द्रियार्थानां स्वस्मिन्यद्ग्रहणे क्षमम् ।
अनिषेध्या ह्यसंदिग्धा प्रमाणानां च सा प्रमा ॥ २ ॥

अज्ञातपितृको नैव पतिरोमादिसङ्कुलः ।
नाज्ञातो यज्ञधारश्च मन्त्रपेतादिवर्जितः ॥ ९८ ॥
धूमभ्रमात्पराभावादावनुमां बाधितुमुताम् ।
बोध्यानुमानमात्रस्याप्रामाण्यं चेद्भवेत्तदा ॥ ९९ ॥
न्यायवादौ पुरुषभ्रान्तेः प्रत्यक्षमपि दूषितम् ।
मत्वा तदप्यप्रमाणं न कथं हन्त मन्यसे ॥ १०० ॥
स०११) सामान्यतोदृष्टरीत्या यदि लोकान्तरानुमा ।
पुरोविमानरूपादेर्विशेषोऽनुमितः कथम् ॥ १०१ ॥
संभवस्तर्क्यते तस्य यद्व्याहतिविवर्जितम् ।
व्याहतं यत्स्फुटं तस्य संभवोऽपि न तर्क्यते ॥ १०२ ॥
सुखि चाराच्च कस्यापि वायो चारोऽनुमीयते ।
न पितुः प्रतर्क्याविस्पष्टात्परेषां कल्पनीयता ॥ १०३ ॥

सूत्रे—विज्ञानमदः १।१।३४ । ज्ञानं सर्वात्मोपलंभस्तत्प्रमाणं प्रमाणानाम् १।१।३५ ॥

अथोदशाधिकरणमारचयति-

विध्यर्थवादयोरत्राविवेके हानिकृन्न वा ।
अर्थवादे विस्रम्भाच्च हानिः कापि दृश्यते ॥ १ ॥
अर्थवादेषु विस्रम्भाज्ज्ञानविज्ञानविप्लवः ।
सिद्धो हि से चरन्पद्भ्यां ज्ञानाद्यैः किं करिष्यति ॥ २ ॥

---

पैालस्त्यो भास्करस्पर्शी वैदेही मुनिशोणितात् ।
मत्युक्तिरोदृशी सर्वा न श्रद्धेया कथं चन ॥ १०४ ॥
फलं परत्र सर्वत्र सर्वज्ञत्वं तथात्मनि ।
अल्पयत्नः सिद्धभूताः परिहार्याः प्रयत्नतः ॥ १०५ ॥
(१०१२) द्रष्टुर्बहिर्यो विषयोपलम्भो विज्ञानमेतद्विदितं जनानाम् ।
ज्ञानं तु सर्वात्मन ईश्वरस्य स्वस्मिन्स्वरूपस्य किलोपलब्धिः ॥१०६
मनः शरीरं च सहेन्द्रियं तथा ततोऽपि बाह्यान्विषयानिहात्मनि ।
स्वयं स यः साक्षितयेक्षते विभुः स एक एव प्रमितः परा प्रमा ॥१०७॥
क्षणस्य कल्पस्य च यत्र नो भिदा चिदात्मनि स्वप्रमितो चिरस्थिते ।
अशेषतश्चिन्मयः सकेवलं क्षणेषु साम्यव्यतिरेकवाचकः ॥१०८॥
अमुष्य सर्वात्मन्नहोदधेर्भिदाभिदवात्मने बुद्धु दवारिविभ्रवः ।
अधर्मसज्ञानभक्तिमापिता न तत्त्वमेतस्य विदन्ति ये जनाः ॥१०९॥

नानुमानातिरिक्तास्ति दृष्टिर्दिव्या तु का चन ।
अनुमानात्मिका सा चेदस्तु व्याप्तिग्रहादिजा ॥ २ ॥

---

भारतवर्णयनादिमहिम्ना गौरवं भारतवर्षवर्णीनाम् ।
सिद्धधूर्तसमाजस्य महत्त्वं दिव्यशक्तिकपटाश्रयमेव ॥ ५ ॥
दिव्यशक्तिमधिगम्य तु सिद्धात्कुक्कुरोऽपि विदधीत निबन्धान् ।
विद्यया पुनरनल्पकसत्त्वोऽनल्पधीश्च कुरुते किल कार्यम् ॥ ६ ॥
सिद्धधूर्तवचोभिः किं श्रद्धया दिव्यशक्तिषु ।
विद्योद्योगादि संत्यज्य निराशान्कुरुषे पितॄन् ॥ ७ ॥
सर्वतो जयमन्विच्छेत्पुत्रादिच्छेत्पराभवम् ।
आशा पितॄणामित्येषा व्यर्थयेन्मूर्ख एव ताम् ॥ ८ ॥
पूर्वजानामृषीणां को दिव्यानां तुल्यतां व्रजेत् ।
पुरात्परामवस्थांशां तेषां कन्तति धीरियम् ॥ ९ ॥
मायावादादिभिर्मिथ्या-प्रपञ्चैर्वञ्चितं जगत् ।
अनुद्योगपरं बन्ध-विसर्पेण निपीडितम् ॥ १० ॥
प्राचीनसभ्यता तस्मिन्दुर्विषयं व्यलुप्यत ।
आविर्भूता नवान्यत्र भारते नोपलभ्यते ॥ ११ ॥
विद्योद्योगवतां यत्नात्स्वेषात्राविर्भवन्त्यपि ।
आध्यात्मिकादिवादवाद-वाक्पङ्कं हा विषीदति ॥ १२ ॥
वैज्ञानिका महोद्योगा अस्तुवन्तोऽपि पूर्वजान् ।
सुखान्युज्ज्वलयन्त्येषां सत्पुत्रोऽर्हं यशः स्थिरम् ॥ १३ ॥

सूत्रम्—न विद्या दृष्टिरनुमानानतिरेकात् १।२।१ ॥

विस्तरो दिव्यशक्तित्वादनभ्यासाद्यसंभवाः ।
इत्यादि कीर्तयन्पुत्रः कलङ्कयति तान्कुधीः ॥ १४ ॥
न दिव्यशक्तिमत्त्वेन पितृत्वेनैव पूर्वजाः ।
पूजनीया यतस्तस्मात्स्तुतिस्तेषामनर्थिका ॥ १५ ॥
यस्तु सिद्धा इति पितॄनर्चयेत्सोऽतिविक्लवः ।
स नीचान्सिद्धिविख्यातान्सहसा पूजयिष्यति ॥ १६ ॥
मोक्षरीभ्यहरिश्चन्द्रावरजा हि महौजसः ।
न वयं सिद्धधूर्तानां जातु सिद्धिषु लोलुपाः ॥ १७ ॥
राज्यस्यागाचाभिचाराद्भीष्मः सिद्धिं परां दधे ।
विससर्ज हरिश्चन्द्रो विभूतीः पक्षयं प्रति ॥ १८ ॥
श्रुतिदर्शनविज्ञानां सूत्रासामायवर्चस्विनाम् ।
भारतादिप्रणेतॄणां दायादा भारता वयम् ॥ १९ ॥
आयस्यकायविज्ञाने कोऽर्थो जगति नः किल ।
दिव्यदृष्ट्या महामूर्ख-पूकदृष्ट्येकगम्यया ॥ २० ॥
यन्त्रादिसाधनोपेतैरवधानपुरःसरम् ।
सूर्यादिदृष्टंर्भुवन-ज्ञानं ज्योतिर्विदां स्फुटम् ॥ २१ ॥
तत्सूर्यसंयमाद्युक्तैर्देवधैं पतञ्जले ।
वैज्ञानिकानां कोऽर्थः स्याद्दिव्यचिन्तादिमाप्रतः ॥ २२ ॥
बिम्बध्यानादिमात्राद्वा जगज्ज्ञानं यदीष्यते ।
पार्थानेः, कस्तदार्था मस्तेषां व्याहतया गिरा ॥ २३ ॥

द्वितीयाधिकरणमारचयति-

अपौरुषेयं पुरुषोद्भवं वा श्रुतिवाङ्मयम् ।
अपौरुषेयं दिव्यं स्याद्यद्वेदोद्भासितं भुवि ॥ १ ॥
मधुच्छन्दःप्रभृतिभिराम्नातं प्रथितं स्फुटम् ।
नापौरुषेयं तस्मात्तदैशं तु निखिलं जगत् ॥ २ ॥

---

अ० २) अपौरुषेयतां को नु नृगिरां भावयेत्सुधीः ।
ज्ञानस्यापौरुषेयत्वं श्रुतीनामेव तत्कथम् ॥ २४ ॥
विश्वामित्रवसिष्ठादि प्रणीताः श्रुतयः किल ।
अभिमीलन्ति स्पष्टं मानुष्यो गिर ईदृशः ॥ २५ ॥
अज्ञातवक्तृकत्वाद्वा यन्त्रादेरागमाच्च वा ।
भ्रांतिकल्पेत्स्या स्वनयाह·शब्दादावपि संभवेत् ॥ २६ ॥
विधिर्मनुष्यशब्दोऽत्र दिव्यमव्याहतं मतम् ।
आसुरं व्याहतं प्रोक्तमुपचारेण मानवैः ॥ २७ ॥
अव्याहतानां स्वीकारं व्याहतानां च वर्जनम् ।
वक्तारमनपेक्ष्यैव शिष्टाः कुर्वन्त्यसंशयम् ॥ २८ ॥
तत्र वक्त्रनपेक्षत्वात्तद्दिव्यासुररूपणम् ।
विधेस्तु वक्त्रपेक्षत्वान्मानुषत्वमुदाहृतम् ॥ २९ ॥
अपौरुषेयता तस्माच्छ्रुतौ चेदौपचारिकी ।
तदुपादेयताहेतुर्व्याहतेषु कथं न सा ॥ ३० ॥

सूत्राणि—नापौरुषेयो मानुषः शब्दो व्याहतेः १।२।२। न च तत्सम्भवेपि शब्दमाहात्म्यं कीचकध्वनिवत्स्वनग्राह्यवद्धाता-ख्येस्वरूपप्रवृत्तेश्च १।२।३। वाचि देवासुरमानुषरूपणं परमार्थव्या-घातविधिसंक्षणम् १।२।४। अवेदपौरुषेयत्वमप्याद्ये पुरुषानपेक्ष-त्वात् १।२।५। तथा तु व्याघातोपि १।२।६। तस्मादपौरुषेयत्व-मुपादेयत्वाप्रयोजकम् १।२।७। न वाचि सर्वात्मीयत्वाद्बहुमानो-विश्वस्यैव तथात्वात् १।२।८॥

---

आद्योपदिष्टा ये मन्त्राः कीर्तिर्षिभ्योऽपरैः श्रुताः।
ते समाम्नायविरहाच्छ्रुतयः प्रथिता भुवि॥ ३१॥
स्वार्थाभिरूपदेशाद्याम्नाता एतास्ततोऽपरैः।
श्रुताः स्मृत्वा प्रणीतास्तु स्मृतयः परिकीर्तिताः॥ ३२॥
सर्वात्मीयं जगत्सर्वं को विशेषः श्रुतेस्ततः।
तस्माच्च सर्वात्मीयत्वं श्रुत्याप्रत्ययप्रयोजकम्॥ ३३॥
अस्य भूतस्य महतो यन्निःश्वसितरूपणम्।
अनुव्याख्यानपर्यन्ते तत्समस्तेपि वाङ्मये॥ ३४॥
अन्यतः प्रकृतेर्ज्ञानं सर्वं प्रकृतिवीक्षणात्।
सर्वाभ्या प्रकृतिश्चेति बादरायणसंमतम्॥ ३५॥
अद्वैतवादिनां भेदाः प्राकृताप्रकृतादयः।
असंमता यतस्तस्मात्सर्वतः सत्यमाहृतम्॥ ३६॥

तृतीयाधिकरणमारचयति–

विध्यर्थवादयोर्भेदः स्वरूपेस्ति पुनर्न वा ।
न स्फुटोस्ति तयोर्भेदस्तस्माद्वयमुपेक्ष्यताम् ॥ १ ॥
आसीद्भविष्यत्यस्तीति त्र्यात्मकादर्थवादतः ।
इदं कुर्विति रूपस्य विधेर्भेदः परिस्फुटः ॥ २ ॥

(अ० ३) भूद आसीदिदं चास्ति भविष्यत्येतदीदृशम् ।
अर्थवादाख्यया ख्यातं शब्दोत्र ज्ञापकः परम् ॥ ३७ ॥
इदं कुर्विति सर्वस्य विधेराकारईरितः ।
तस्य शब्दैकमेयत्वं हेतूनां त्वर्थवादता ॥ ३८ ॥
उपपादकतैवात्र प्रामाण्यं ज्ञापनं न तु ।
प्रामाण्यमर्थवादे तत्प्रत्यक्षानुमयोः परम् ॥ ३९ ॥
अर्थ एकोत्र जायादेः संग्रहस्तद्विधो भिदाः ।
शिबिकायामभावादौ वरस्यारोहणं यतः ॥ ४० ॥
सर्वस्य स्वपिता श्रेयान्विद्वान्वा मूर्ख एव वा ।
यथैव स्वविधिः श्रेयान्सफलो निष्फलोपि वा ॥ ४१ ॥
स्वधर्मे निधनं श्रेयः श्रीकृष्णोपि जगादतः ।
भमयो धर्मनिःश्रेणावस्मिमीलनकेलयः ॥ ४२ ॥
अध्याहृतो य आप्तस्य विधिस्तस्य फलं श्रमः ।
अन्विष्यैव भक्त्यामुं वाणिज्यास्त्वनुतिष्ठति ॥ ४३ ॥

सूत्राणि—शब्देऽर्थवादविधिभिन्नः १।२।९ । आसीदस्ति भविष्यतीत्यर्थवादः १।२।१० । भवितव्यमिति विधिः १।२।११ सा जैमिनेश्चोदना १।२।१२ । एकोऽर्थो वैकल्पिका विधयः १।२।१३ ॥

चतुर्थाधिकरणमारचयति—

सर्वाः प्रतिज्ञाः पित्रादेः स्वीकार्या वा न वा जनैः ।
स्वीकार्या एव पित्रादेराप्तत्वादखिला अपि ॥ १ ॥

---

मातापितृनृपाचार्य-विधींस्तस्मादहेतुकम् ।
अनुतिष्ठेच कुर्वीत तत्र हेतुपरीक्षणम् ॥ ४४ ॥
स्वास्थ्याय गोमयस्पर्शो बलवृद्ध्यै सुरां पिबेत् ।
तस्मात्तद्विधिषु हेतूनां न प्रशस्ता गवेषणा ॥ ४५ ॥
(श्लो० ४) एकापेक्ष्योपपत्तिश्चान्यानपेक्ष्योपपत्तिका ।
परोपपत्तिविहता प्रतिज्ञा त्रिविधा ततः ॥ ४६ ॥
प्रतिष्ठापटवर्णादि रामभारोहणादिकम् ।
तथैव स्तुतिपाठाद्यमनपेक्ष्योपपत्तिकम् ॥ ४७ ॥
सर्वात्मीयेषु कार्येषु यावचैव क्षतिर्भवेत् ।
तावद्धेत्वनपेक्षैव कार्या तेषामनुष्ठितिः ॥ ४८ ॥
स्तुतिपाठस्य वेलायां जनेनूपप्लवो यदि ।
को वा जनपदाध्यक्षः स्तुतिपाठं न कारयेत् ॥ ४९ ॥
आचारपालनं तावद्यावद्धर्मस्य न क्षतिः ।
पारमार्थिकधर्मारिमाचारं परिवर्जयेत् ॥ ५० ॥

**अनपेक्ष्योपपत्तित्वाद्विधिः स्वीक्रियतां जनैः ।**
**अपेक्षितोपपत्तित्वादर्थवादः परीक्ष्यताम् ॥ २ ॥**

---

सिद्धोक्तिष्टैर्मतैर्बुद्धिः परीक्षार्थावलोकनम् ।
उपपत्तिहतं सर्वमीदृशं दूरतस्त्यजेत् ॥ ५१ ॥
पुष्पकादिकथानां च मण्यादिरत्नगस्य च ।
निवापजायास्तृप्तेश्चापुत्रापुष्टत्रस्य वा नृणाम् ॥ ५२ ॥
स्थितमत्युक्तिमात्रत्वं नोपपन्नं हि तादृशम् ।
उपपत्तिविरुद्धेषु मन्त्रार्थेषु वर्जयेत् ॥ ५३ ॥
शैलानां वाक्यवस्थानमीदृगन्यच्च यद्भवेत् ।
तस्योपपत्तिरन्वेष्या तदपेक्ष्योपपत्तिकम् ॥ ५४ ॥
प्रत्यक्षमनुमानं वाप्युपपत्तिर्हि चोच्यते ।
यत्र नान्यतरत्तस्य स्थितेश्चानुपपन्नता ॥ ५५ ॥
संभवत्येतयोर्दोषो नत्वन्या दोषवर्जिता ।
अप्रमत्तैस्तयोर्दोषापनयाय प्रयत्यताम् ॥ ५६ ॥
अशुचित्वादिसंबन्धः सर्वत्रैव नृणां यतः ।
अवमानं वा पिशाचं वा कः करोतु गुरुं ततः ॥ ५७ ॥
तथाप्यत्र सदोषत्वं प्रत्यक्षानुमयोर्जनः ।
शब्दस्य नैव प्रामाण्यमविधो वक्तुमर्हति ॥ ५८ ॥
वन्ध्यापुत्रादिशब्देभ्यो न तदर्थस्य सत्यता ।
न पुष्पकादिशब्देभ्यो विमानादेश्च सत्यता ॥ ५९ ॥

सूत्राणि - प्रतिज्ञा सोपपत्तिकानपेक्षितोपपत्तिकोपपत्तिविरुद्ध-त्वात्त्रिविधा १-२-१४। सा च प्रत्यक्षोपलम्भोऽनुमितिर्वा १-२-१५। शब्दोपलम्भः शाब्द इति चेन्न शब्दस्थितिमात्रोपपाद-कत्वात् १-२-१६। न व्याहतार्थः शाब्द इति चेन्न वन्ध्यापुत्रादि-स्मरणात् १-२-१७। आप्तत्वानुमानात्तदुक्तः सोपपत्तिकत्वानुमा-नमिति चेन्नार्थवादे प्रमादस्य सर्वत्र संभवात् १-२-१८। अबा-धादाप्तत्वं नाप्तत्वादबाधः १-२-१९ ॥

---

स्वर्णां ज्ञात्वा गिरिं जानन्यथा स्वर्णगिरिं वदेत् ।
तथा विमानमाह स्म रथं चोड्डयनं स्मरन् ॥ ६० ॥

अनुमायाप्ततां वक्तुर्वदिष्यन्नत्यवादिताम् ।
प्रमादसंभवादुक्तेः संशयार्हो न किं वदेत् ॥ ६१ ॥

न सार्वकालिकं कस्याप्याप्तत्वं दृश्यते क्वचित् ।
अबाधितार्थवक्तृत्वात्तन्मात्रे ह्याप्तता मता ॥ ६२ ॥

पितास्त्रमेण पुत्रस्य वधः पुत्रेण वा पितुः ।
कस्याप्तता कः सन्दध्यात्मतिमान्सार्वकालिकीम् ॥ ६३ ॥

अतथा प्रामाणिकमात्मनां स्वानुभवगुर्वादेशेषु मानवः ।
अबाधसंभवेनेति विधेया गुरुजनाप्तताम् ॥ ६४ ॥

सबाधसंभवे स्वर्णवादे कस्यापि नाप्तता ।
बाधबाधितोऽर्थस्तु निर्णीत उपपत्तिभिः ॥ ६५ ॥

पञ्चमाधिकरणमारचयति–

उपपत्तिविरुद्धस्य विधेरनुगमो न वा ।
कार्यमेवानुगमनं श्रेयसोनादरोन्यथा ॥ १ ॥
उपपत्तिविरुद्धस्यासंभाव्योनुगमः स्फुटम् ।
तद्वक्तुरप्यनाप्तत्वं वाचि व्याहतिदर्शनात् ॥ २ ॥

---

( अ० ५ ) अर्थवादस्ततः सर्व उपपत्तिमपेक्षते ।
उपलब्धोपपत्तेश्च सत्यता तस्य नान्यथा ॥ ६६ ॥
अनपेक्ष्योपपत्तिस्तु विधेयेन विधिर्यतः ।
सहेतुर्वाप्यहेतुर्वा सद्योनुष्ठीयते ततः ॥ ६७ ॥
उपपत्तिमपेक्ष्यापि कदाचिद्वा यदृच्छया ।
विधायकैस्तु विधयो विधेयेषु निर्देशिताः ॥ ६८ ॥
भक्ष्याभक्ष्यादिविधये हेत्वपेक्षा उदाहृताः ।
वृषचर्मासनाद्यं तु न सर्वत्र सहेतुकम् ॥ ६९ ॥
मन्त्रपाठादिभिः प्रेत बन्धस्फोटो भविष्यति ।
नर्मदेश्वरविष्णुश्च स्पर्शादङ्गान्युपैष्यति ॥ ७० ॥
इत्यादि मूर्खग्राचाट-पोटादीनां कुकल्पनाः ।
निरस्य तस्माच्चिर्हेतुर्विधेरनुसृतिर्मता ॥ ७१ ॥
उपपत्तिविरुद्धस्तु विधिर्यश्चाविधिस्तथा ।
दृष्टा न तस्यानुमतिर्विनिपातफला हि सा ॥ ७२
तालद्रुमफलोर्थे पितुः कूपे पतिष्यतः ।
निवारणं सुतः कुर्यात्पतनाद्वात्मनस्तथा ॥ ७३ ॥

सूत्राणि—सोपपत्तिकोऽर्थवादः १-२-२२। विधिरनपेक्ष्योपपत्तिको विधेयस्य १-२-२१। उभयथा विधायकस्य १-२-२२। उपपत्तिविरोधादुन्मत्तप्रलापस्तस्य नानुगमो निरोधस्तु प्रमादात् १-२-२३॥

षष्ठाधिकरणमारचयति—

अर्थवादा असंदिग्धाः शब्दमात्रोदिता न वा।
महतामुदिताः शब्दैरसंदिग्धाः कुतो न ते॥ १॥
प्रत्यक्षमनुमानं वा न यावद्बाधवर्जितम्।
शब्दमात्रोदितस्तावदर्थः संशयगोचरः॥ २॥

सूत्राणि—अर्थवादः संदिग्धोऽसंदिग्धश्च १-२-२४। बाधसंभवे शब्दमात्रप्रतिपादने वा संदेहः १-२-२५। अबाधिते प्रत्यक्षेऽनुमाने वा तदभावः १-२-२६॥

सप्तमाधिकरणमारचयति—

अव्याहतेऽर्थवादे स्यात्संशयो व्याहतेऽपि वा।
व्याहतेर्दुष्करं ज्ञानं तस्मात्सर्वत्र संशयः॥ १॥

---

( अ० ६ ) असंदेहससंदेहावर्थवादौ द्विधा मतौ।
प्रत्यक्षे वानुमाने वा निर्बाधे नैव संशयः॥ ७४॥
प्रत्यक्षे वानुमाने वा संभाव्यद्बाधसंभवे।
संशयः शब्दमात्रोक्ते त्वर्थवादे सदोचितः॥ ७५॥

( अ० ७ ) असंशयोऽपि द्विविधो भावाभावावगाहनात्।
उपपन्नस्य भावः स्याद्व्याहतस्य त्वसंभवः॥ ७६॥

एकज्ञानेऽपि तद्धर्म्य-व्याहतिज्ञानदर्शनात् ।
निश्चिताव्याहतावेव संशयो नेतरत्र तु ॥ २ ॥

सूत्राणि—असंदेहो भावावगाहो १ २ १७। संदेहो व्याहति-रहिते प्रवृत्तेरबाधकः १ २ २८। व्याहते तु सद्योऽसत्यतानिश्चयो वक्त्रादिनिरपेक्षः प्रवृत्तेर्बाधकः १ २ २९। यत्किंचिज्ज्ञानात्तद्वर्गीयव्याहतिज्ञानं तथा चारुणिः १ २ ३० ॥

---

उपपत्तिपरीक्षे यः संशयः समुदाहृतः ।
सोऽपि निर्व्याहतावेव व्याहतस्य त्वसत्यता ॥ ७७ ॥
संशयेऽपि प्रवृत्तिस्तु स्याद्व्याहतिविवर्जिते ।
ज्ञानशार्दूलसंदेहे सखड्गः प्रविशेत्सुखम् ॥ ७८ ॥
कामं देवोऽपि वक्ता स्याद्व्याहते तु न सत्यता ।
असत्यत्वग्रहः सद्यः प्रवृत्तेर्बाधकश्च सः ॥ ७९ ॥
स्फुलिङ्गस्यैकस्यापि वृक्षस्य च परीक्षणा ।
व्याहतं वह्निना वृक्ष-सेचनं ज्ञायते जनैः ॥ ८० ॥
ज्ञाने सर्वस्य धूमादेर्व्याप्तिज्ञानं न चान्यथा ।
इति चार्वाककल्पस्तु सर्वथा व्याहतः स्फुटम् ॥ ८१ ॥
एकस्य नखकृन्तस्य ज्ञानात्कार्ष्णायसं नृणाम् ।
विज्ञातं सर्वमेव स्यादित्याचारुणिरपीक्षते ॥ ८१ ॥
तद्वर्गीयस्य कस्यापि ज्ञानाद्व्याहतिवर्जनम् ।
वर्गे तस्मिन्भवत्येव निर्णयेद्व्याहतिं ततः ॥ ८३ ॥

अष्टमाधिकरणमारभते—

प्रमादाद् दृष्टिभेदाद्वा वन्ध्यापुत्रगवेषिभिः ।
दृश्यते मन्त्रशक्त्यादि दृष्टिभेदादिदं भवेत् ॥ १ ॥
प्रमादादीदृशं दृश्यं प्रमादस्य च हेतवः ।
आप्तत्वकल्पना दोषा विस्मयाद्याश्च चेतसः ॥ २ ॥

---

( अ० ८ ) आप्तस्यानुमितेः सत्यं वदेदेवेति दुर्ग्रहः ।
वैज्ञानिकाद्भुतैश्चैव विस्मयाब्धौ निमज्जनम् ॥ ८४ ॥
गुणस्य लङ्घनं तर्के मध्यमस्य विपर्ययः ।
व्याहतांशानवगतिः संक्षेपो मानसस्तथा ॥ ८५ ॥
अवधानाधिकारादेरसम्यक्परिशोधनम् ।
वन्ध्यापुत्रानुसन्धान-मठस्थो भ्रमहेतवः ॥ ८६ ॥
युधिष्ठिरं गृहीत्वाप्तं सत्यमेव वदिष्यति ।
इतिभ्रमाद्गुरुद्रोणः संपराये व्यपद्यत ॥ ८७ ॥
अनुमानोपपन्नं यत्प्रत्यक्षेणोपलभ्यते ।
वैज्ञानिकाद्भुतं दृष्ट्वा कस्तद्विस्मितमानसः ॥ ८८ ॥
प्रत्यक्षेणानुमानेन स्फुटं प्रत्याहतं हि यत् ।
तृणां शिलाप्रवेशादि तच्चक्रध्यानतः कथं च न ॥ ८९ ॥
गच्छाम्यहं पठ्यतं परः कोपयतं तथा ।
अनेन गतिभेदेन तर्कयेत्को नरोऽद्वयम् ॥ ९० ॥
पिता चेज्जीवितो स्याज्जीवितो सुतस्तथा ।
कोऽस्मात्तु संयुगीयानां मन्येतायुर्जीविताम् ॥ ९१ ॥
मुद्राप्याद्युठयेन्मन्त्रैः स्पष्टं व्याहतमीदृशम् ।
दर्शनतः कुतः मन्त्रशक्तौ वदिष्यति ॥ ९२ ॥

सूत्राणि-वन्ध्यापुत्रान्वेषिणां प्रमादहेतवः १-२-३१। आप्तत्वानुमानं प्रत्यक्षैर्विज्ञानाद् भुतैर्विस्मयपारवश्य गुणविलङ्घी मध्यमत्रिपर्यासवांश्च तर्कः १-२-३२। व्याघातांशस्य प्रच्छन्नस्यादर्शनमौत्प्रेक्षिकः

कन्या वा विधवाः कामं मिद्धधूर्ताङ्गमस्मजान् ।
ख्यापयेयु सुतांस्तेषां जारजत्वं तु निश्चितम् ॥ ९३ ॥
महाफलानि दृष्ट्वापि न तर्कयितुमर्हति ।
मन्त्रप्रेतादिजन्यानि तान्युन्मादविवर्जितः ॥ ९४ ॥
सामान्यं कारणं तेषां छलाचेव विभाव्यते ।
न जारनामाज्ञानेन वैधवेयस्तु दैवज्ञः ॥ ९५ ॥
केचिज्जले स्थले वायौ यानत्रयमतर्कयन् ।
मन्त्रोदितं रथं पश्चात्सर्वंगं समकल्पयन् ॥ ९६ ॥
पादुकागुटिकाद्यैश्च संप्रत्याहुर्वियद्गतिम् ।
अयमौत्प्रेक्षिको हन्त संतपो भारते स्थितः ॥ ९७ ॥
पूर्वं गवाश्वयानानि वाष्पयानं ततः परम् ।
ततश्च वैद्युतं व्योम-यानं चेति महाजमाम् ॥ ९८ ॥
क्रमो द्वीपान्तरीयाणां विकामो वास्तवो यतः ।
चतोऽजमां व्यथामेव नूनं मार्गो विधास्यति ॥ ९९ ॥
विनाधिकारभूम्यादि-शुद्धिं यो हेतुनिर्णयः ।
कः श्रद्दधीत प्रेतावांस्तस्मिन्बालिशजल्पिते ॥ १०० ॥

कुतुकजातमिदं किल दर्शयते ननु मनूनपि विश्वसितोद्धताः ।
इति सदर्पमुदीरयतो द्रुतं घनविशोधनमेव परीक्षणम् ॥ १०१ ॥
चिरचिकित्सनमव्यघोषधैः सकलसेकमुपक्रमते जनः ।
यदि तदाचरणेऽवयवर्जितः किमु विधिर्न स एव विधीयते ॥ १०२ ॥

संक्षेपोधिकारसाधनावधानभूम्याद्यशोधनं च १-२-३३। उत्पादने घनाविशोधनम् १-२-३४। मन्त्रे जाङ्कुलाविदा विषबलापरीक्षणं निर्मन्त्रक्रियाफलादर्शनं च १-२-३५। परोक्षज्ञाने पत्राङ्काविसुखनिर्णयप्रश्नानुपन्यासः १-२-३६। योगेवान्तरोपायानपेक्षादि १-२-३७। एतेनेदृशं सर्वं व्याख्यातम् १-२-३८॥

इति प्रथमाध्यायस्य द्वितीयाह्निकम्।

---

विषबलेल्पतरे किल जीवनं मरणमेव सुनिश्चितमन्यथा।
इतविशेषवशेन कजः कथं प्रतिविधानमिदं परिभावय॥ १०३॥
अहमिह स्थित एव जगद्गतं निखिलवृत्तमवैमि परीक्ष्यताम्।
इति वदन्कितवः सुखनिर्णयं किमपि हन्त जनैः परिपृच्छ्यताम्॥१०४॥
ननु पुरः परिवर्त्स्यसि पुस्तकं मम करे कमलस्य तदुच्यताम्।
कितव हे कतिथं खलु पृष्ठकं तदिह तस्य कथं न्वसि मौनवान्॥१०५॥
असुनिरोधविधेः करिणो बलं सकलभूतहितावगमस्त्वया।
इति वदत्यवधानवतां परं फलमिति स्फुटमाह पतञ्जलिः॥ १०६॥
अवहितस्य फलं जगतो मतं न पुनरस्त्यवधानवतामपि।
फलमनुत्तममाश्रयतां भवेदवहितो महितोत्तमतत्परः॥ १०७॥
इति कितवचरित्रं जानता मानवेन स्फुटमतिशयचित्रं दृष्टमप्यत्र लोकैः।
न किल फलमुपेयं व्याहृतं कौतुकादेरभिमतपरमार्थः किं नु रक्ष्येदनर्थं॥१०८॥

इति प्रथमाध्यायस्य द्वितीयाह्निकम्॥

---

द्वितीयाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति—

परिच्छिन्नोऽस्ति वान्यादृक् सर्वात्मा भगवानयम् ।
स्वापतेयः परिच्छेदः सर्वथास्योपपद्यते ॥ १ ॥
अमाममस्यतः पत्युः स्वयमेवायमीशिता ।
परिच्छेत्तुरभावाच्च नैयत्तास्योपपद्यते ॥ २ ॥

सूत्राणि—आकाशत्वक् सहस्रशीर्षा सर्वात्मा २-१-१ । आकाशः प्रकाशधर्मावकाशमात्रगोऽनन्तः २-१-२ । तस्मिन्त्सागरद्व द्वीपान्यसंख्यानि विश्वानि २-२-३ । ते त्रिन्द्वो बुद्बुदावा सर्वात्ममहोदधेः २-१-४ । अंशतो ज्ञातमिदमेकम् २-१-५ ॥

---

वार्तिकानि—

(वा०१) अनन्तमाकाशमिदं पयोधेर्द्वीपैरिवाम्भो निचितं च विश्वैः ।
एकस्य तस्यास्त्वनुपाश्रयस्य प्रस्तूयते वर्णनमत्र किंचित् ॥ १ ॥
ताराग्रहोपग्रहकेतुजातैः परस्पराकर्षणनिघ्नचारैः ।
विचित्रवर्णाकृतिभिः समन्ताद्व्याप्तं विशालं किल विश्वमेतत् ॥ २ ॥
धराभितो वर्तुलकल्पकया कदम्बकिञ्जल्कनिभा च तस्याम् ।
देशेष्वनेकेषु कृताधिवासाः सर्वत्र खं मूर्ध्नि विलोकयन्ति ॥ ३ ॥
आकृष्टिशक्त्याखिललोकभाजा धरातलाद्गच्छति खं न किंचित् ।
अधार्यमाणं सलिलानिलाद्यैस्तस्माच्च कस्यापि निपातशङ्का ॥ ४ ॥
भूकेन्द्रपातित्वमधोनिपातः तत्संमुखीना गतिरूर्ध्वगत्वम् ।
अतो धरार्धान्तरचारभाजां निपातशङ्कोर्ध्वगतित्वबुद्धिः ॥ ५ ॥
प्रकाशधर्मावकाशमात्र-व्याप्तिश्चाकाश उदीर्यमाणे ।
दृष्ट्या स्वया यन्त्रसहायया वा यदीक्ष्यते तस्य विचारणात्र ॥ ६ ॥

द्वितीयाधिकरणमारचयति—

ग्रहादेः पुरुषाधीनाकृष्टयधीनाथवा गतिः ।
स्याद्गतिः पुरुषाधीना रथादौ दर्शनात्तथा ॥ १ ॥
जलाद्यान्यथा दृष्टेर्न गतिः पुमपेक्षिणी ।
नियम्ये चेतनापेक्षा नियतेस्त्वनपेक्षता ॥ २ ॥

सूत्राणि—तस्मिंश्छायापथताराग्रहोपग्रहकेतवः प्रधानानि प्रमेयस्थानानि २-१-६ । स्वाधाराः परस्पराकृष्टिनिघ्नचाराः सर्वे २-१-७ । आकृष्टिर्मानानुलोमा विप्रकर्षप्रतिलोमा च २-१-८ ॥

तृतीयाधिकरणमारचयति—

छायापथादयः सर्वे गतिमन्तोऽन्यथाथ वा ।
मूगतेर्गतिभानं स्याद्गतिष्वप्यमोऽष्वलम् ॥ १ ॥

( श्लो० २ ) मानानुलोमा किल विप्रकर्षप्रतीपाकर्षणशक्तिरत्र ।
स सर्वगा सर्वगतिस्थितीनां निमित्तमेषेति वदन्ति तज्ज्ञाः ॥ ७ ॥

( श्लो० ३ ) स्फुरत्ययं फेनचयावभासश्छायापथो दूरतमः पृथिव्याः ।
दृश्यः क्व चित्तारकितः परत्र सिताभ्रसंघातनिभः प्रसिद्धः ॥ ८ ॥
शुभाभकाञ्चीप्रतिमः प्रवेष्ट्य ताराद्विकं ज्योतिषि विभासमानः ।
छायापथोऽयं विपुलोऽस्ति वाष्पावस्थास्थितो द्रव्यचयप्रचारः ॥ ९ ॥
घनीभवद्बाष्पचयादमुष्मात्कालेन तारानिकरो विजज्ञे ।
ततो ग्रहोपग्रहवर्ग आसीदुत्प्रेक्षितं केश्चिदिदं सुधीभिः ॥ १० ॥
स्वयंप्रकाशा निरपेक्षताराः सूर्या असंख्या निजमण्डलस्य ।
केन्द्रस्वरूपा विचरन्ति तेषां ताराख्यया सर्वजने प्रसिद्धिः ॥ ११ ॥

आकृष्टेरनिवार्यत्वात्सर्वेऽपि गतिशालिनः ।
परिवृत्तिर्धरापेक्षा धरागमनहेतुका ॥ २ ॥

सूत्राणि—छायापथोऽतिविप्रकृष्टः २-१-९ । तस्मिंस्ततः पृथक् च सूर्याः सूर्येतरानिलचारास्ताराख्याः २-१-१० । सूर्यस्तारेत्यनर्थान्तरम् २-१-११ । तद्वर्गाः सप्तर्षिप्रभृतयः २-१-१२ । सर्वे सगतिकाः २-१-१३ ॥

---

अथाच्छरन्तोऽपि विहायसीमे तापप्रकर्षात्पृथुप्रकाशाः ।
स्थिता इवेक्ष्यन्त उदीर्णवेगाः पोता इवाम्भस्यतिविप्रकर्षात् ॥ १२ ॥
तेषां धराया अतिसन्निकृष्टस्तापप्रदोऽयं किल सूर्य एकः ।
अन्ये तु सूर्या अतिविप्रकृष्टाः स्फुरन्ति रात्रौ दिवसे त्वदृश्याः ॥ १३ ॥
श्वेतारुणश्यामलपीतधूम्र-नीलादिवर्णा बहुशोऽत्र ताराः ।
काश्चित्पृथक्चारभृतः परास्तु संबद्धचाराः सुधियां प्रसिद्धाः ॥ १४ ॥
विद्वत्सु तारानिकरस्य वर्गाः सप्तर्षिमुख्याः प्रथिता अनेके ।
वर्गक्रमेणात्र सुखेन तासां विशेषवित्तार्थविधिः सुबोधः ॥ १५ ॥

सप्तर्षिशिशुमारशिफाः सुमेरुसविधेऽवगतिवृत्ते ।
ध्रुवाजानुगमुकुटं कचकश्यपुनर्वसो वनातुश्च ॥ १६ ॥
त्रिनक्रमेलकश्वप-गोधाहंसाः शिवा परे वृत्ते ।
गरुडनरेन्द्रभुजङ्गाः करिमुण्डः सिंहव्याधकः सूनः ॥ १७ ॥
पशुत्रिकोणदोला वाजिश्वतरा तिमिर्बाणः ।
एते तृतीयवृत्ते चतुर्थवृत्ते तु राशयः प्रथिताः ॥ १८ ॥
सरटक्षुद्राक्षिघटिकाः सुवर्णयष्टिः कपोतश्च ।
पोतशलाकाष्टाशं कुमेरुसविधेऽवगतिवृत्ते ॥ १९ ॥

चतुर्थाधिकरणमारभयति—

ताराणां स्वप्रकाशत्वं रविभास्यत्वमस्ति वा ।
तापस्यानुपलम्भात्ता रविभास्या ग्रहादिवत् ॥ १ ॥
स्वप्रकाशा इमे सूर्यास्ताराख्यास्तपमण्डलाः ।
रवितोऽप्यतिदूरत्वात्तासां तापानुभूयते ॥ २ ॥

सूत्राणि—भूमेः संनिकृष्टतमस्तापदः सूर्योऽयमेकः २-१-१४ । तस्य मध्यमो भूविप्रकर्षः कोटिः सार्धाष्टलक्षा २-१-१५ । प्रभाया विकलया संचारः सार्धत्रयोविंशतिसहस्राणि २-१-१६ ।

वृत्तत्र्यस्रमपूर्वाश्चतुरस्रं पर्यङ्का सरित्त शफरी ।
शुनकश्चाश्वशङ्कुमुण्ठा मुषली इति च द्वितीयवृत्ते तु ॥ २० ॥
महिषवृकबर्हिद्वारवणकोटाराणि मिथुनञ्च ।
सूर्यसवर्णमपि सारस-शकुनौ टङ्कस्त्रिशिरा व्याधः ॥ २१ ॥
शङ्को वस्त्रशिशुः श्वपचमसः काकस्तृतीयवृत्तगताः ।
ज्योतिर्गणितार्भिश्चरीति तारापरिषदो निर्दिष्टः ॥ २२ ॥

( आ० ४ ) सार्द्धाष्टलक्षान्वितकोटिमानो रवेर्भुवो मध्यमविप्रकर्षः ।
ततः प्रभायाति धरां कलाभिरष्टात्मिकाभिर्महतीयवेगा ॥ २३ ॥
सार्द्धत्रयोविंशतिसंमितानि प्रभा सहस्राणि तु योजनानाम् ।
कालेन सैषा विकलात्मकेन चात्युदग्रेण जवेन युक्ता ॥ २४ ॥
शङ्कुद्वयादप्यतिविप्रकृष्टास्ताराभुवो या अतिसंनिकृष्टाः ।
लक्षाधिकैरप्यतिविप्रकृष्टास्त्रिभेति तारानिकराद्विशास्मात् ॥ २५ ॥
तद्विप्रकर्षातिशयाच्च तापः प्रभा परं भूमिमुपैति ताभ्यः ।
ज्ञाताश्च सूर्यस्य ततो ग्रहाद्या न तारकाणामतिविप्रकर्षात् ॥ २६ ॥

शंकुद्वयाधिकः संनिकृष्टतमताराविप्रकर्षः २-१-१७ । अतिविप्रकृष्टेभ्योऽर्धलक्षण भूप्राप्तिर्विप्रकर्षमवगमयति २-१-१८ । तस्मात्तेभ्यः प्रभामात्रागमो न तापाधिगमः २-१-१९ । सूर्यस्यास्य ग्रहादयो ज्ञाताः संनिकर्षान्नान्येषामतिविप्रकर्षात् २-१-२० ।

पञ्चमाधिकरणमारचयति—

ग्रहैः सह रविः पृथ्वीं परिगच्छति वा न वा ।
परिगच्छन्नविहृष्टः काम्या स्यात्तत्र कल्पना ॥ १ ॥
महीग्रहो ग्रहैरन्यैः सह पर्येति भास्करम् ।
अयनर्तूपरागादि सर्वमित्थं समञ्जसम् ॥ २ ॥

---

( अ० ५ ) सूर्यः प्रसिद्धो निरपेक्षचारस्तत्सापेक्षचारा ग्रहनामभाजः ।
उपग्रहास्तु परनिघ्नचारा ग्रहाः सपुच्छा इह केतुसंज्ञाः ॥ २७ ॥
बुधः सितः क्षितिभौमबृहस्पती शनिरथाप्युरणो वरुणस्तथा ।
त्रिदशरिहाष्ट रवेर्महितो ग्रहाननुपसहस्रलघुग्रहसंयुतान् ॥ २८ ॥
शून्ये त्रये तद्द्विगुणेषु चेत्थं चतुर्युतेषु ग्रहविप्रकर्षः ।
तं प्रायिकं केचिदुदाहरन्ति न विप्रकर्षो नियमेन बद्धः ॥ २९ ॥
द्वासप्तत्या युक्ता त्रिशती व्यासो बुधस्य संकलितः ।
योजनचतुष्टयं किंचिदूनं कक्षागतेर्वेगः ॥ ३० ॥
सार्धं लक्षचतुष्टमस्य रवेर्मध्यमन्तरं प्रोक्तम् ।
प्रायोऽष्टाशीत्याह्नां सूर्यं परितः परिभ्रमणम् ॥ ३१ ॥
शुक्रस्यार्धशतोनं सार्धत्रियुतं सहस्रकं व्यासः ।
अस्य पुनर्योजनत्रयमस्य च कक्षागतेर्वेगः ॥ ३२ ॥
सचतुर्लक्ष प्रयुताष्टकं पुनः साष्टसहस्रम् ।
सार्धचशतपञ्चयुक्तं रवितः शुक्रस्य मध्यमन्तरं प्रोक्तम् ॥ ३३ ॥
प्रायः सपञ्चत्रिंशति-दिनशतयुग्मेन तु भ्रमणम् ।
शुक्रस्य तत्त्वमित्थं ज्योतिर्विद्भिर्निर्णीतम् ॥ ३४ ॥

सूत्राणि—सूर्याधीनचारा ग्रहा लघवो महान्तश्च सं परियन्ति २-१-२१ । ईदृशाचारादयनर्तुपरागादि २-१-२२ । महान्तोऽष्टौ बुधः शुक्रो भूमिर्भौमो जीवः शनिररुणो वरुणश्च २-१-२३ । क्रमतो वर्धमानायामास्तत्कक्षा दीर्घवृत्ताकाराः २-१-२४ । सूर्यः केन्द्रान्यतरः २-१-२५ । भौमजीवयोर्मध्ये लघुग्रहाः परःशताः शचीरमाद्याः २-१-२६ ॥

षष्ठाधिकरणमारचयति—

केतवो विविधाकाराः सौरा आगन्तवोऽपि वा ।
निश्चिता न गतिस्तेषां तस्मादागन्तवस्त्वमी ॥ १ ॥

---

सार्धदशोनसहस्रं भूमेर्व्यासोऽत्र संकलितः ।
प्रायः शुक्रसमानस्तस्याः कक्षागतेर्योग ॥ ३५ ॥
साङ्घ्र्यष्टिनवयुक्ता कोटिर्मध्यान्तरं रवितः ।
प्राय सपञ्चषष्टि-त्रिशतदिनैस्तत्परिभ्रमणम् ॥ ३६ ॥
अर्धसहस्रं सहार्धोनिसचत्वारिंशदन्वितं व्यासः ।
भौमस्य किंचिदूनं द्वितयं कक्षागतेर्योगः ॥ ३७ ॥
कोटिः सप्तायुतानि सप्तलक्षाण्ययुतमेकम् ।
साढ्यशतषट्कसहितं सहस्रयुग्मं च मध्यमन्तरं रवितः ॥ ३८ ॥
सप्ताशीतिसमन्वित दिनशतषट्केन तत्परिभ्रमणम् ।
भौमग्रहस्य तस्य तदिदं ज्योतिर्विदाभिष्टम ॥ ३९ ॥
सार्धद्व्यशीतियुक्तं सप्तशताढ्यं किलायुतं व्यासः ।
जीवस्य योजनमितः कलितः कक्षागतेर्योगः ॥ ४० ॥
सचतुर्लक्षं साष्टायुतं सहस्रान्वितं शतैः पञ्च. ।
साङ्घ्रिभिरुपेतमन्तरमस्य चतुर्भिः सहस्रैस्तु ॥ ४१ ॥
सार्धद्वात्रिंशद्युत-शतत्रयाढ्यं दिनैः परिभ्रमणम् ।
जीवग्रहस्य तत्त्वं ग्रहविद्भिरिति विनिर्णीतम् ॥ ४२ ॥

सूत्रे—सप्रभापुच्छा अनतिघना अतिदीर्घतारकूलगाः सौरा आगन्तवश्च, केतवः २-१-२७। ते वाष्पीयाश्छायापथांशवत् २-१-२८

सप्तमाधिकरणमारचयति—

चन्द्रोऽस्मेक एवास्ति बहवस्तादृशा उत ।
एकस्यैवोपलम्भेन बहूनां कल्पना कुतः ॥ १ ॥
ग्रहाधीनगमाश्चन्द्रा उपग्रहपदाभिधाः ।
दूरवीक्षणदृश्याश्च षड्विंशतिरिह स्थिताः ॥ २ ॥

सूत्रं—ग्रहाधीनचारा उपग्रहाश्चन्द्राख्याः २-१-२९। पृ॰ । भूवरुणयोर्द्वौ भौमस्याष्ट जीवस्य चत्वार उरणस्य दश शनेर्निवेदिताः २-१-३० ॥

अष्टमाधिकरणमारचयति —

भूगर्भे मेरुशृङ्गादौ ग्रहेष्वन्येषु वा क्वचित् ।
स्युर्वा न वा स्वर्निरयाः, स्युरेवोक्ताश्चिरंतनैः ॥ १ ॥

---

( श्लो० ७ ) एको भुवो द्वौ च कुजस्य चन्द्रौ बृहस्पतेरष्ट शनेर्दशात्र ।
चत्वार एवारुणकस्य दृष्टा एकोऽथ याम्यवरुणग्रहस्य ॥ ५४ ॥

( श्लो० ८ ) नैव नाकनिरयादिकोऽस्यस्तिन्त्वारकादिषु किंनोपपद्यते ।
दिव्यदृष्टिगगनाविभिन्दतां स्वर्गो न च दृश्यतेऽपि सा ॥ ५५ ॥
नापि सा विनिरदिश्यत स्फुटं तारकादिषु विपश्चित्सूरिभिः ।
कल्पनेयमसमञ्जसा कवेः स्वप्नसंभ्रम इति निश्चयः ॥ ५६ ॥
केन्द्रमात्मवसतिपदस्य पङ्क्तिर्नास्ति मध्यस्तनं सदा ।
ये विपत्य परं पदादपस्ते तु अधश्चराः प्रसर्पिणः ॥ ५७ ॥

व्याप्तित्वात्परिणामस्य दुःखादेर्नित्यसंकरात् ।
लोकान्तरेऽमरत्वादि-वर्णना कविकल्पना ॥ २ ॥

सूत्राणि—असदनीदृशेषु निर्दिष्टम् २-१-३१ । एतेषूर्ध्वाधो-भेदः सुखाद्यतिशयश्चकवीनामुत्प्रेक्षा २-१-३२ । तथा पुत्रत्वगु-रुत्वयुद्धहंतृत्वादिकल्पना नराकारादिकल्पना च २-१-३३ ॥
नवमाधिकरणमारचयति—

व्यक्ता सर्वेषु लोकेषु भवेज्जीवस्थितिर्न वा ।
तैजसादिभिदायोगादव्यक्ता सर्वत्र सा भवेत् ॥ १ ॥
तप्तपिण्डे रविनिभे शीते च शशिना समे ।
व्यक्ता जीवस्थितिर्नैव, शीतोष्णे सा क्षिताविव ॥ २ ॥

अस्तु कस्य तदिहोर्ध्वलोकता कस्य वा पुनरधस्तनी स्थितिः ।
संपदाद्यतिशयोऽनुमीयतां कीदृशः कथमथोर्ध्वचारिषु ॥ ५८ ॥
मङ्गलः क्षितिसुतो बृहस्पतिर्नाकनायकगुरुर्नराकृतिः ।
भूमिसाम्यगुरुतादिहेतुका इत्यमूः कविकुलस्य कल्पनाः ॥ ५९ ॥
(श्लो० ६ .) केतुतारकशशिपक्षादिक-व्यक्तिपूर्णजडभिन्नता स्थिता ।
जीवशक्तिरिह तद्भिदानुगा तद्भवास्थितिमिमां विदुर्बुधाः ॥ ६० ॥
अन्तरूष्मसु बहिर्जडास्विह व्यक्तिपूर्वघटति जीवसंततिः ।
बाह्यतापविगमे हि भूपहः प्राणिनां क्रमविकाससमादधे ॥ ६१ ॥
या महोष्मसमयग्रहाः पुनर्व्यक्तयो रविनिभाश्चरन्ति खे ।
बाह्यतापविगमप्रतीक्षिणी जीवशक्तिरधुनाऽसु कल्प्यते ॥ ६२ ॥
याः पुनः शिशिररश्मिशीतलास्ताश्चिराय गतजीवशक्तिकाः ।
प्राणिनां न पुनरेकतः खगात्संक्रमः किल परत्र संगतः ॥ ६३ ॥

सूत्राणि- शीतोष्णोष्णशीतभेदः सर्वत्र २-१-३४ । अव्यक्तिः शीतोष्णेषु, पृथिव्यामिव २-१-३५ । उष्णेष्वव्यक्ता जीवशक्तिर्यथा सूर्ये २-१-३६ । शीतेषु नष्टा यथा भूमिचन्द्रे २-१-३७ ।

दशमाधिकरणमारचयति=

वैज्ञानिकैर्यत्प्रकृतेस्तत्त्वमत्र विनिश्चितम् ।
तत्प्रत्यक्षानुमानाभ्यां शब्दमात्राश्रयेण वा ॥ १ ॥
शब्दमात्राश्रयेण स्यात्पौराणिककथादिवत् ।
नोपपन्नमिदं शब्दो मानं नैवाविधौ यतः ॥ २ ॥

सूत्र -तदुपलम्भः प्रत्यक्षानुमानाभ्याम् २-१-३८ । विस्तरो वाङ्मयमहार्णवेन्यत्र च २-१-३९ ॥

इति द्वितीयाध्याये प्रथमाह्निकम् ।

---

( अ० १० ) अर्थजातमिदमीदृशं बुधैर्हेतुसंगतमतर्क्यमापकैः ।
नत्वतीन्द्रियपुण्यदर्शिभिर्दिव्यदृग्भिरपरास्यमर्मभिः ॥ ६४ ॥
कौतुकाय सुधियामयं कियान्दर्शितः प्रकृतितत्त्वसंग्रहः ।
विस्तरार्थिभिरलं ह्यवगाह्यतां वाङ्मयार्णवतरङ्गमालिका ॥ ६५ ॥

इति द्वितीयाध्याये प्रथमाह्निकम् ।



# द्वितीयाध्याये द्वितीयाह्निके

प्रथमाधिकरणमारचयति—

अन्वेष्यहेतुः सृष्टिः स्यात्सादिराहो तु शाश्वती ।
सादिः स्यान्निर्मितेशेन नहि किंचिदहेतुकम् ॥ १ ॥
सृष्टिवैचित्र्यतः पूर्वोक्तैर्विषयान्तरनिःसृतिः ।
सा कीदृगिति विज्ञानं कुतः सेत्यज्ञकौतुकम् ॥ २ ॥

सूत्राणि—शाश्वतं विश्ववैचित्र्यमगम्यबीजं तथा च श्रुतिः । २-२-१ । व्यक्तंस्तु सादित्वं सान्तत्वं च । २-२-२ । न कस्मादिति विज्ञानविषयः कीदृगिति सः २-२-३ ॥

---

( अ० १ ) शाश्वती किल जगद्विचित्रता चेत्तु हेतुमदसीयमत्र कः ।
आदिमन्तमपि तत्र केवलं व्यक्तयो दधति तद्द्वयोज्झिते ॥ १ ॥
कीदृगत्र ननु तत्त्वमित्ययं भाति शास्त्रविषयः परिस्फुटम् ।
इत्थमेतदथ नान्यथा कुतः कस्य तर्कविषयो भवेदसौ ॥ २ ॥
द्रावयत्यहिमदीधितिर्हिमं वारि शोषयति चेति दृश्यते ।
नान्यथैव नियमः किमित्ययं के समादधतु वा कुकल्पनाम् ॥ ३ ॥

द्वितीयाधिकरणमारचयति—

क्षीराब्धिरूपणं क्व स्यात्पार्थिवे वा पयोनिधौ ।
वियच्चरे वा कस्मिंश्चित्पार्थिवे स्यात्तथोक्तितः ॥ १ ॥
क्षित्यादिविश्वाधारस्य विष्णोर्यद्वयमाश्रयः ।
छायापथोऽतः क्षीराब्धिरस्य विश्वस्य वेष्टनम् ॥ २ ॥

सूत्राणि-सर्वोऽत्मन्यक्षर ओतश्च प्रोतश्चाकाश इति याज्ञवल्क्यः । २-२-४ । तदेतद्विश्वोपाधिमद्विष्णुपदं क्षीराब्धिनिभेन च्छायापथेन वेष्टितम् । २-२-५ । छायापथशर्कराणां वियति प्लवनं मेघानामिव वायुमण्डले । २-२-६ ॥

तृतीयाधिकरणमारचयति--

ब्रह्मा स्यात्पुंविशेषो वान्यो वा, स्यात्स पुमान्ध्रुवम् ।
कुलालवद्धि सर्वं स निर्मिमीते महोद्यमः ॥ १ ॥

(अ० २) अक्षरात्मनि विष्ण्वाद्यात्मके प्रोतमोतमिति यज्ञवल्क्यजः ।
विश्वमेव वियदाश्रयं स्फुटं शाश्वताम्बरनिर्विचित्रता ग्रहम् ॥ ४ ॥
विश्वमेकमिदमस्मदाश्रयो यद्विभत्तु तदुपाधिकं स्थितम् ।
तस्य विष्णुपदसंज्ञता स्फुटं ख्यापिता वियति सर्वसंमता ॥ ५ ॥
वेष्टितं च तदनातपाध्वना क्षीरवारिधिनिभेन सर्वतः ।
तत्र बाष्पपटलैरसंख्यकैर्व्याप्तमस्य शर्करैरितस्ततः ॥ ६ ॥
(अ० ३) तच्च बाष्पपटलादयोद्भवात्सारमण्डमुदभूत्कृतश्च तत् ।
ब्राह्ममण्डमिति यद्विपश्चितः कीर्तयन्ति महसा हिरण्मयम् ॥ ७ ॥

उद्यदरुणपद्मगोऽसौ ब्रह्मा सूर्यो न संशयः ।
हिरण्मयमृताण्डस्य स गर्भः स्वयमुद्बभौ ॥ २ ॥

सूत्राणि–कुतश्चिच्छायापथशकलाद्विष्णुपदे प्रततेजोमयाद्रविकेन्द्रकमिदमण्डम् । २–२–७ । हैमं रवितेजसा । २-२-८ । तत्परिच्छिन्नस्य विष्णुपदस्य नाभावरुणपद्माश्रयो रविः । २-२-९ । स बृहत्त्वाद्ब्रह्मा प्रयुतार्चिरूर्मिभिस्समः परितस्तेजोमयत्वात्सर्वतोमुखः । २–२–१० । सर्वशक्तिमयेन धाम्ना विश्वसृट् स्वयम्भूः । २-२–११ । अनेके ब्रह्माणोऽनेकानि च ब्रह्माण्डानि । २–२–१२ प्रतिरोमकूपं सर्वात्मन इति कवयः । २–२–१३ ॥

तद्विभज्यत च यात्यनेहसि प्रादुरास च रविस्तदन्तरे ।
तुष्यतश्च परिधेर्बुधादयो जज्ञिरेऽस्य विपदङ्गणाश्रयाः ॥ ८ ॥
इत्थमेव तपनो मताग्रजो रश्मिभिश्च किल सर्वतोमुखः ।
एष सौरजगतश्च सर्जनाद्विश्वसृक्कथित एष च स्वभूः ॥ ९ ॥
अप्रमेयमहनात्मपूरुषे रोमकूपसमविश्वमण्डले ।
कत्यमी किल मरीचिमालिनस्तत्प्रमत्य तु परिच्छिनत्तु कः ॥ १० ॥

(अ० ४) भज्यमानपरिधावथाण्डके तस्य केन्द्रमभवद्विभाकरः ।
सृज्यते स्म च ततः क्रमाद्ध्रुतोपग्रहादिनिकरो नभोऽङ्गणे ॥ ११ ॥
निःसरत्सु रवितो ग्रहेष्वथ भूग्रहोऽपि समये विनिर्गतः ।
तप्तबाष्पमयपिण्डतां दधत्प्राणिमर्त्स्यतिविरोधिनीं चिरम् ॥ १२ ॥
बाष्पवायुमयतेजसः शनैरूष्मनिर्गमभवैस्ततो घनैः ।
सान्द्रवारिपरिणामिभिः कृता भूरियं सलिलपूरसंप्लुता ॥ १३ ॥

चतुर्थाधिकरणमारभ्यते-

य औपनिषदः सर्गस्तस्य वैज्ञानिकाद्गिरा ।
समन्वयो वा. भेदः स्याद्भूतादिक्रमभेदतः ॥ १ ॥
वैचित्र्ये शाश्वतेप्यत्र व्यक्तः सर्गक्रमः स्थितः ।
समन्वयश्च तत्रास्ति प्राचां वैज्ञानिकैः सह ॥ २ ॥

सूत्राणि-तदण्डं क्रमाद्व्यभज्यत केन्द्रग्रहोपग्रहादिपूर्वकेषु । २-२-१४ । ग्रहादिषु तेजसो बाष्पवायोर्वा शनैरुष्मनिर्गमे पामुद्भवः । २-२ १५ । तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवदिति वाजसनेयिनः । २-२-१६ । आन्तरोष्मार्णवयोर्युद्धादुद्भेदाः । २-२-१७ । सेयं तप्तकेन्द्राश्मीभवत्त्वगा क्रमाविर्भवज्जीवविकाशा । २ २ १८ । तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी

---

सान्द्रतां यति च वारिणः शरं पस्तरीभवति सागरैर्नगैः ।
व्यस्यमानविलसद्वर्तावृता कामिनीव वसुधा व्यराजत ॥ १४ ॥
आन्तरोष्मपयसोरभूद्यतो भूदरे व्यतिकरो भयङ्करः ।
पावकोपवृषदुद्भिदास्ततो निस्तरा उदभवन्यतस्ततः ॥ १५ ॥
सेयमुच्चतगिरिस्तना मही मातरिश्वपरिवेषगुण्ठना ।
प्राप्य वारितरलाम्बराम्बुधेर्मेतु रङ्गमरुचत्स्वयं वरा ॥ १६ ॥
तप्तकेन्द्रपिठरा शिलास्तरप्रायवारिधरवेष्टनावृता ।
भूरभूत्क्रमविकासशालिभिर्भूरिजीवनिकरैरधिष्ठिता ॥ १७ ॥
एवमेव सकलात्मनि स्फुटं सर्ग औपनिषदैरुदीरितः ।
खानिलाग्निजलभूविकासनिक्रमाद्वृद्धिवादिपरिणामनिर्भरः ॥ १८ ॥

पृथिव्या ओषधय ओषधिभ्यो भूतानीति तैत्तिरीयाः २-२-१६ । सदेव सोम्येदं तत्तेजोऽसृजत तदपोऽसृजत तदन्नमसृजतेति छान्दोग्याः २-२-२० । अन्नमत्र पृथिवीति बादरायणः । २-२-२१ । एतेनामूलकल्पनोक्तिर्नव्यानां नराकारोक्तिश्च मध्यमानां निरस्ता २-२-२२ ॥

पञ्चमाधिकरणमारचयति—

महाकल्पादयः प्राचां सार्था याहच्छिका उत ।
याहच्छिकाः स्युः संबन्धाभावादर्थोऽगिह स्फुटम् ॥ १ ॥

रवितापादिसंबन्धात्कल्पमन्वन्तरादयः ।
सार्थका एव नियतमर्मा ग्राह्या यथायथम् ॥ २ ॥

सूत्रे—रवितापावस्थानावधि ब्रह्मदिन महाकल्पः । २-२-२३
पृथिव्यां स्वायम्भुवस्वारोचिषवैवस्वताद्या मन्वन्तराख्याः कल्पाः २-२-२५ ॥

---

सर्गसोपनिषदं स्वमूलिकां कल्पनामथ नरादिमूर्तिकाम् ।
सष्टुरत्र किल कल्पयन्ति ये दुर्धियस्त उभयेत्र धिक्कृता ॥ १९ ॥

(सू० ५) भास्वदूष्मावनयावधि स्फुटं ब्राह्ममेकदिनमुच्यते बुधैः ।
कीर्तितं तदभिधान्तरं महा-कल्प इत्यपि विपश्चितां वरैः ॥ २० ॥

कल्पजातमथनादथान्तरं मानवान्तरसमाख्ययोदितम् ।
अन्तरं निजगदुः स्वयं भुवो भास्वदण्डसमयस्थितिं भुवः ॥ २१ ॥

स्वप्रकाशपरितप्तगोलकेऽत्रान्तरं निगदितं स्वरोचिषः ।
व्यात्ततत्पथ विवस्वदंशुभिर्भूपदेऽत्र तु विवस्वदन्तरम् ॥ २२ ॥

षष्ठाधिकरणमारचयति—

व्यक्तयोऽत्रावताराः स्युर्जातयो वा झषादयः ।
विशिष्टा व्यक्तयः स्पष्टमवतारा उदीरिताः ॥ १ ॥
सिंहः पशूनामित्यादि-व्यपदेशात्तु जातयः ।
अवतारा गुणैर्योगादेव व्यक्तिषु तद्वचः ॥ २ ॥

सूत्राणि—अवतारा जीवजातयः । २-२-२५ । योग्यतमावस्थानाद्विशेषो महाव्यालादीनाम् । २-२-२६ । जनकयोगाद्योग्यताधिक्यमुभयोर्धनत्वेत्रस्थानपर्वे । २-२-२७ ।

(श्व ६) प्रादुरास कूर्ममीनकच्छपाद्याकृतिक्रमाय कामशालिना ।
जीवशक्तिरथवा नराद्यधिस्तंभजंस्तदवतारतामतः ॥ २३ ॥
यास्तु रामयागजादयोऽभवन्व्यालजातय इह समासते ।
ता विनेशुरथ योग्यताधिकैः पीडिताः किल शरीरिभिर्हठात् ॥ २४ ॥
योग्यताधिकतराश्रिता सुते योगतो जनकयोर्जनुष्मति ।
पैतृकः प्रकृतिजोऽथवा न चेत्कोऽपि हेतुरपकर्षको महान् ॥ २५ ॥
शाश्वती किल जगद्विचित्रता नात्र कार्ययुगमेकहेतुकम् ।
हन्त हेतुभिदयेति दृष्टया संगता विषमता मता खिला ॥ २६ ॥
पूर्वजन्मपरजन्मकल्पना वैषमीमिति समञ्जसामपि ।
या समर्थयितुमाश्रिता जनैः सा प्रमादभगवत्कृता परम् ॥ २७ ॥

सूत्रमधिकरणमारचयति—

भूः स्थिरा वा सगतिका सा स्थिरैवोपलभ्यते ।
लक्ष्यरेखापगमनात्त्वितादृशस्थितिभेदतः ॥ १ ॥
अबाधितानुमानेन भूरियं गतिशालिनी ।
निर्णीता स्थितिभानं तु घर्षणादेरभावतः ॥ २ ॥

सूत्राणि—भूरक्षपरिवर्त्तिनी सूर्यं पर्येति ग्रहान्तरवत् । २-२-२८ । गतेरुपपत्तयः । २-२-२९ । घर्षणाभावादन्तादर्शनाच्च गतेरननुभवः । २.२-३० । बाष्पशकटस्थस्य तरुस्तम्भादीनामिव नक्षत्रादीनां गतिभानम् २-२-३१ । नौदृष्टान्तो वा २-२-३२ ॥

---

(का० ७) भूमिरक्षपरिवर्तिनी रविं हायनेन परियाति सर्वदा ।
सूर्यगो यदुगतिर्विनिश्चिता सूरिभिर्ग्रहविदा भुवि स्थितैः ॥ २८ ॥
लक्ष्यालयापगमादपक्रमाच्युतो निपतनस्तथाश्मनः ।
संगतेश्च गणनासु सर्वथा गौरियं गतिमती विदां मता ॥ २९ ॥
घर्षणं न धरणीवियत्पथे नैव निस्तलतयाऽन्तदर्शनम् ।
वेगवत्यपि ततोऽनुभूयते नैतदीयगतिरस्मदादिभिः ॥ ३० ॥
भाति बाष्पशकटेन गच्छतो नौकया सरिति वा प्रसर्पतः ।
धावमस्फुटगमं तटद्रुमस्तम्भजातमपि तु प्रतिव्रजत् ॥ ३१ ॥
तद्वदेव नभसि प्रसर्पतां भूवरेण सह नो निजाश्रयः ।
भासते स्थिर इव प्रतिव्रजद्दृश्यते च रवितारकादिकम् ॥ ३२ ॥

अष्टमाधिकरणमारचयति—

जलेन प्रलयः किंवा प्रालेयेनाथवा मतः ।
जलेन मत्स्यमैत्रकस्तस्मात्स्वीक्रियतां तथा ॥ १ ॥
प्रालेयव्याकृतिः शालातुरीयाद्यैर्यथा कृता ।
भूविद्यावेदिनामिष्टः प्रालेयप्रलयस्ततः ॥ २ ॥

सूत्राणि—अन्त्यान्तौ मेरुद्वयं दक्षिणोत्तरम् । २-२-३३ । मेरौ प्रालेयनिपातः प्रलयस्तन्निर्वचनात् । २-२-३४ । कृतारम्भः सरित्सागरगिर्यादिलङ्घिनाम् । २-२-३५ ॥

नवमाधिकरणमारचयति—

युगव्यवस्था दैव्या वा मानव्या समयापि वा ।
दैव्या स्याद्वैष्णवीयादौ दिव्यशब्दस्य दर्शनात् ॥ १ ॥
मानभिन्नेष्वहोरात्रे दिव्यमानुषवर्षयोः ।
अयनद्वितयात्मत्वात्साम्यं वादोऽत्र नोचितः ॥ २ ॥

सूत्राणि—ध्रुवीयमहोरात्रसमं दैवं वर्षम् । २-२-३६ ।

---

( अ० ८ ) चक्रपीठस्थित केन्द्रबोधिनी भूगतस्य परिकल्पिता तु या ।
मेरुयुग्ममिति दक्षिणोत्तरं कीर्तितं तदवधिद्वयं बुधैः ॥ ३३ ॥
मेरुमुत्तरमुपाश्रयन्पुरा ह्यनिशात्मकसमस्तवत्सरम् ।
सुस्थिताः सुचिरमार्यपूर्वजाः कर्षणादिकुशला महौजसः ॥ ३४ ॥
यात्यनेहसि हिमान्युपप्लुता मेरुभूरथ बभूव भीषणा ।
तां विहाय च जनाः प्रतस्थिरे दक्षिणां दिशमपारितौजसः ॥ ३५ ॥
ये हिमप्रलयविप्लवेषु ते व्यन्तरत्विं निधनं महागजाः ।
रोमशा उपययुः सहस्रशस्तेऽद्य यावदपि यान्ति दृश्यताम् ॥ ३६ ॥

तदयनद्वयात्मकमनियतदिनसंख्यमत्र ग्रहान्तरेषु च । २-२-३७ । द्वादशसाहस्रे मानवानां चतुर्युगे न दिव्यशब्दः २-२-३८ । दिव्यमानुषयोः समत्वेपि कचिद्दिव्यशब्दः प्राक्स्थित्यपेक्षः । २-२-३६ । युगव्यवस्था देशभिन्ना भूतमात्रे न भविष्यति २-२-४० । त्रेताद्वितीयं कृततुरीयं वा तदाग्रहवताम् २-२-४१ ॥

दशमाधिकरणमारभ्यते—

सप्तद्वीपयुताः सप्त स्थिता मध्यादिवार्धयः ।
अन्यादृशा वा, सप्त स्युः प्राच्यैरुत्प्रेक्षिता यथा ॥ १ ॥
क्षारस्य संचयाच्छद्वद्वाष्पोभवति वारिणि ।
विसर्गलवणाम्भोधिर्महाद्वीपद्वयं त्विह ॥ २ ॥

---

सागरांश्च सरितो गिरींस्तथा यद्विलङ्घ्य शतशः सम ययुः ।
सप्तसिन्धुपरिभूषिता भुवो विश्रुतास्त महार्यपूर्वजाः ॥ ३७ ॥
तेन तद्युगमभूत्कृतात्मनां संमतं क्षितितले कृताख्यया ।
सत्यमित्यपि मयाकुकल्पनावर्जनाद्विदुरमुष्य चाभिधाम् ॥ ३८ ॥
( श्लो० ६ ) मेरुमण्डलनिवासिनामहोरात्रतुल्यमयनद्वयं विदुः ।
वत्सरोयनयुगेन संमितस्तत्र नैव नियतस्त्वहर्गणः ॥ ३६ ॥
मेरुवर्षमिदमेव दिव्यमित्युच्यते नरसमासमानता ।
पार्थिवायनयुगात्मनः स्फुटा स्वस्य हन्त ऋजुचेतसामपि ॥ ४० ॥
पूर्वजानुचरणोद्धतैः क्वचिद्दिव्यवर्षगणना समादृता ।
स्वीकृतापि न युगव्यवस्थितावन्तरं घटयितुं क्षमेत सा ॥ ४१ ॥

सूत्रे—अत्र संप्रत्येको नैसर्गिकलावण्यः समहाद्वीपद्वयः सोऽस्त्रावचारोऽनेकद्वीपोपद्वीपो महार्णव उपाधिभिन्नः २-२-४२ । सुरादिकल्पना वर्णादिहेतुकातिशयोक्तिः पोतादिसागरवत् २-२-४३॥

इति द्वितीयाध्यायस्य द्वितीयाह्निकम् ।

---

दिव्यमानुषभिदामपास्य सत्यामर्षीसमवत्सरस्य वत्सं च ।
स्वीकृता युगचतुष्टयस्थितिर्नाद्य संघटयितुं कलिं क्षमा ॥ ४२ ॥

भूतमार्गविधया युगस्थितिः किं स एव नियमो भविष्यति ।
देशभेदमिव साध्यवर्तते नैकरूपमुपयातुःयता भुवाम् ॥ ४३ ॥

सार्वकालिकयुगत्रयस्थितेः कल्पयिष्वयेऽप्यथापरे ।
तुर्य एव चरणः कृतस्य वा प्रेत एव किमु वादिमात्परः ॥ ४४ ॥

द्वादशाब्दमयुतार्धमत्र यत्साऽपते समुदयस्य कलेर्गतम् ।
द्वादशाब्दिमशतान्यतः कलेः सत्यमेव तु युगं ततः परम् ॥ ४५ ॥

ह्रास एकचरणक्रमाद्यथा वृद्धिरप्यथ तथैव संमता ।
द्वापरात्कलियुगद्वयाश्रमात्त्रेतयैव पदमर्पितं ततः ॥ ४६ ॥

त्रेतयाद्य कृतसंनिधौ क्षितौ सर्वतः शुभकृतेः पदंश्रयम् ।
दुष्कृतेश्चरणमेकको हठाञ्चारते निर्गलितः प्रमादिनि ॥ ४७ ॥

(पृ० १०) एवमद्य भारतानमस्कृतौ त्रेतया विहितसंनिधौ क्षितौ ।
एक एव लवणो निसर्गतः पायसां पतिरुपाधिभेदवान् ॥ ४८ ॥

वंशकान्तिमयमम्बु भूतले वर्तते स्थलमयैककोशकः ।
द्वीपयुग्मकमिह स्थितं महत्क्षुद्रभूर्यवनिबिन्दुसंयुतम् ॥ ४९ ॥

सुरार्णवादेः परिकल्पना तु या परिस्फुटात्युक्तिरियं चिरंतनी ।
क्षीराब्धिश्यामलतादि वारिधावुपाधिजं आस्रवलंब्य कल्पिता ॥५०॥

इति द्वितीयाध्यायस्य द्वितीयाह्निकम् ।

तृतीयाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति—

ज्ञानं कर्म च भक्तिश्च समुच्चेयान्यथो न वा ।
परस्परविरुद्धत्वान्न स्यात्तेषां समुच्चयः ॥ १ ॥
अन्योन्यसहकारित्वाच्छ्रेयांस्तेषां समुच्चयः ।
न पारमार्थिकस्तेषां विरोधं कश्चिदीक्षते ॥ २ ॥

सूत्राणि-कर्मेत्येके ३-१-१ । ज्ञानमेव भिक्षवः ३-१-२ ॥
भक्तितृतीयं तद्द्वयं तु मनसस्त्र्यात्मकत्वात् ३-१-३ ॥

द्वितीयाधिकरणमारचयति—

पितृत्वाद्येव बीजं स्याद्भक्तेर्लिप्साथवा परा ।
भक्तिर्बाह्यफलाधीना सर्वं लाभेच्छया यतः ॥ १ ॥

---

अ० १ ) न केवलं कर्म पुमर्थ इष्यते जडेऽपि वाप्यानसि दृश्यते हि तत् ।
अकर्म च ज्ञानमसंभवं द्वयो न चेतनस्यात्मन इष्टतुष्टये ॥ १ ॥
इतीष्यते चेतसि बुद्धिवेदना-क्रियात्मके भक्तियुतैव सा द्वयी ।
निसर्गसिद्धास्वतयानुकूल्यतो ममत्वनाशादमतात्मिका ध्रुवम् ॥ २ ॥
विभाजितस्य चेतसि बुद्धिवेदना-क्रियात्मके नैकतमावलम्बनः ।
त्रयं हि तैलाग्निदशोपमं यतः सहायतामेति परस्परस्य तत् । ३ ॥
विवर्धते वेदनया तयाश्रितः क्रियान्विता प्रापदचेष्टितं परम् ।
अतद्द्वयं ज्ञानमभिख्यया समं त्रयो पुमर्थाभिमतः सहृदये ॥ ४ ॥
ममत्वमास्कन्द्य कृती तु विद्यया परं च भक्त्या किल कर्म निर्ममम् ।
तनोति सिद्धिं जनकादिवत्परां विपर्यये दुर्गतिरेव केवलम् ॥ ५ ॥
अ० २ ) नृपे जनन्यां जनके गुरौ तथा परेऽपि च प्रेयसि कोऽपि योऽद्भुतः ।
हृदेकगम्योऽतिशयः स केवलं नरेषु भक्तेरिह बीजमुच्यते ॥ ६ ॥

भक्तेर्बीजं पितृत्वादि बाह्यहेत्वनपेक्षणात् ।
यद्बाह्यफलसापेक्षं तद्वाणिज्यं स्फुटं मतम् ॥ २ ॥

सूत्राणि—भक्तिर्वात्सल्यमकृतोत्कर्षापेक्षमहेतुकाराधनपर्यवसायि ३-१-४ । उपकारः परीक्षितः प्रतीक्षितोवा सर्वात्मना शरीरविशेषस्य वा स उत्कर्षः ३-१-५ । सत्त्वविकाशाभिसर्गि तत्प्रतिमानम् ३-१-६ । ज्ञानाङ्कुरमात्रसहभाविनी सर्वजनी ३-१-७ सर्वमाभासमात्रं तामन्तरेण ३-१-८ । न सा बाह्यसौन्दर्यमुख्याद्यपेक्षिणी ३-१-९ ॥

---

प्रतारयन्तु प्रचुरान्यथोक्तिभिर्न सिद्धधूर्तेषु तु भक्तिमान्भवेत् ।
अमीषु भक्त्या स्वजनं हि सादयन्नयत्ययं निरये विपन्मये ॥ ७ ॥
इयं क्षितिः क्रन्दति मांसवृक्षकैः प्रबाधिता सिद्धविशेषनामभिः ।
न शिल्पशास्त्रप्रथया विपश्चितः समाद्रियन्ते किल तैस्तिरस्कृताः ॥८॥
भुजङ्गमभक्ता विनयस्य शत्रवः सदैव पश्चात्कृतशास्त्रशिल्पकाः ।
विदूषयन्तस्तनयान्कुटुम्बिनां चरन्ति सिद्धा विगतत्रपा भुवि ॥ ९ ॥
समेत्य वा पर्यटनाभिभोजनैरथापि धूर्तैः किल सिद्धनामभिः ।
अयं पुरा खेदयतीति जायते निरस्य शङ्कां तनयं प्रपुष्यतः ॥ १० ॥
अहैतुकं सेवनमादरात्परं अमेयं पित्रोः समुपैति निष्फलम् ।
सहेतुका नैव हि भक्तिरिष्यते ध्रुवं वणिज्यापदवीं तु सार्हति ॥११॥
अतो न पित्रादिषु भक्तिसिद्धये कदापि सिद्धस्य वचांस्यपेक्षते ।
पुपूर्षुगृहीतुं पतिदेवताव्रतं विटं न पौराणिकमेति रात्रिषु ॥ १२ ॥
निरस्य तन्द्रामविभिः कृतानि येधिगम्य शास्त्राणि मनोज्ञसः सुताः ।
प्रदीपदोषानपहाय सूक्ष्मया परीक्षया योजितया पदे पदे ॥ १३ ॥

तृतीयाधिकरणमारभते-

भक्त्योपकारो ज्ञानस्य धर्मस्य च भवेन्न वा ।

भक्तस्य समयाभावाद्भक्त्या स्यान्नाश एतयोः ॥ १ ॥

सत्त्वोद्रेकात्परा भक्तिः सत्त्वं च ज्ञानधर्मयोः ।

सहकारकमित्यस्माद्भक्तिस्तदुपकारिणी ॥ २ ॥

सूत्रम्–ज्ञानधर्मसहकारिणी सत्त्वोद्रेकात् ३-१-१० ।

---

समाहृतार्थैर्विनयेन सर्वतः प्रबन्धजातैः परिपूरयन्ति ते ।

विशोधयन्त्यार्यपथं न दुर्धियः पुरातनानां स्तुतिगानतत्पराः ॥ १४ ॥

कृतादृतोऽयं ननु पारमार्थिकैः सदैव भक्तिः पितृषु प्रशस्यते ।

निरस्य तां सिद्धिविभूतिलोलुपो मरीचिपानैरिह खेदयेद्गुरून् ॥१५॥

न भक्तियोगं किल शास्त्रमोहतः मतं पितृत्यादि हि तत्कृतात्मनाम्

परीक्षया दोषविनिश्चयेऽप्यतश्चिरन्तनानामपहीयते न सा ॥ १६ ॥

स्वरूपतत्त्वं जडमन्धमुद्धतं पतिं निजं या जनकं निषेवते ।

कुलव्रतो कोटि यथा तथा वयं स्वपूर्वजत्वेन चिरन्तनाश्रमः ॥ १७ ॥

यथास्तु भक्तोऽपि यथाप्रधानवान्गुरोः पितुर्वा विजयं विदारयेत् ।

चिरन्तनानामपि निष्ठुरस्तथा परीक्षको दोषमुदस्यति ध्रुवम् ॥ १८ ॥

धर्मेतिकीर्येत महात्मभिः स्वयं विपश्चिरैः ख्यापितसिद्धवैभवान् ।

चिरन्तनान्सद्गतया निषेवितुं यतामहे शुष्कगुणस्तवोत्सुकैः ॥ १९ ॥

यथा तु सभ्याः पितरः कृतोद्यमाः स्वकालिकानां विदुषां धुरि स्थिताः ।

तथाद्य विज्ञानविदां पुरोगतां स्वसन्ततौ सदा घटयेम यत्नतः ॥ २० ॥

धृतिं भजेद्रावणपुष्पकस्तवैर्मनोगनार्थैः किल राघवाङ्कजः ।

कृतार्थयः पाः पुनरात्मनः परैर्नवं नवं निर्मिमतेऽद्य पुष्पकम् ॥ २१ ॥

चतुर्थाधिकारमारचयति-

**भक्तो वाऽयं भजन्दुःखं भक्तिं मुञ्चति वा नवा ।**
**अयोऽपि मार्दवं तापे याति भक्तोऽप्यभक्तताम् ॥ १ ॥**

---

न धूर्तानामायुमुखानलोज्ज्वले सुदारुणे सिद्धिविभूतिगह्वरे ।
निपत्य चिन्तानलराङ्मुखा मुखं कलङ्कयेम स्वकुलस्य दुर्धियः ॥ २२ ॥
अचिन्तनाच्चमत्कारगतं समाश्रितान्विलोक्य जनस्तत्र चिरस्थितिं कृता ।
विदग्धबलगणाः कितवाः स्तुवन्त्यमी परेषु च स्वेषु च दिव्यशक्तिताम् ॥२३॥
(पृ० ३) न तन्त्रमन्त्राद्यभिचारकैतवैर्विभूतिमापुर्महनीयविक्रमाः ।
उपास्य चिज्ञानघनं तु वास्तवं पुरापि सिद्धा भजनमहाद्भुताः ॥ २४ ॥
न योगिनस्थैर्यसमैर्हिमाद्रिजैर्न चापि निःश्वासनिरोधविभ्रमैः ।
जनार्दनं प्रीणाति हन्त तण्डुलानपेक्षते जाठरवह्निशान्तये ॥ २५ ॥
वितृष्णतां भक्तिमहैतुकीं भजन्स्वभावशून्यो विधिजातमाचरेत् ।
पदोत्तमाराध्य पदे पदे चिन्तानिशार्थयाताऽनुदयं जनो भजेत् ॥ २६ ॥
कथासु वेदोपजनप्रियासु वा विषयावसंबन्धमनोरमासु वा ।
विपक्षरोपानतुराश्रितासु वा सुधीः कथास्वामिव कर्तुमर्हति ॥ २७ ॥
समाधिमूर्च्छाकृपणे रुते तथा न चापि जातिस्मरतादिके विदे ।
न वा विपक्षारविडम्बनाविधे जनस्य भक्तिः कुशलं विधास्यति ॥ २८ ॥
यथा वृणां हन्त निकृन्तनामिको विनाशितत्वाय मुहुर्विचेष्टते ।
तथा परेषां कितवैः प्रतारितः प्रतारणाये यतते पुनः पुनः ॥ २९ ॥
पयो निपीतं दुग्धवः स्तनन्धयाः पिबन्ति मातुः प्रणयार्द्रचेतसः ।
भजन्ति नैवात्सुकतां सुधाघटे सुरालयस्थे कविभिः प्रकल्पिते ॥ ३० ॥
तथैव विज्ञानमयं पिबन्सुधीः सरस्वतीस्तन्यमनन्यमानसः ।
विभूतिविस्फारविपञ्चशालिनी-मधुद्रवेणैव धिनोति भावनाम् ॥ ३१ ॥

भक्त्या सह महद्दुःखं सुखं भक्तस्य संमतम् ।
तां विना न सुखं किञ्चिन्नातो भक्तिं स मुञ्चति ॥ २ ॥

सूत्रम्-निरवधि दुःखं तया सह सुखं सुखावधिस्तां विना दुःखम् ३-१-११ ॥

पञ्चमाधिकरणमारचयति-

पित्रादिविरहार्त्तस्य स्याद्भक्तेः संक्रमो नवा ।
पित्रादीनां विनाशे स्यात्सिद्धादौ भक्तिसंक्रमः ॥ १ ॥
विरहाख्यां महाभक्तिं वहन्हन्त कथं सुधीः ।
धूर्ते संक्रमयेद्भक्तिं तस्मात्स्यान्नैव संक्रमः ॥ २ ॥

सूत्रम्-भक्तिविरहो महाभक्तिः ३-१-१२ ॥

---

शिशुर्मुमूर्षुः फणिफेनयिन्दुना क्रमेण मात्रा परिवर्धनाद्यथा ।
शिशस्य विरहाग्न्यपतेन्मारणं तान्मुहूर्तमप्युत्सहते न जीवितुम् ॥ ३२ ॥
तथा महाघ्नदपराङ्मुखा क्रमात्प्रतार्यमाणा किल धर्मकञ्चुकैः ।
विभूतिसिद्ध्यादिमयाकुकल्पना-विषाविपातं बहु मन्तुमीशते ॥ ३३ ॥
(अ ४) सुखं महद्दुःखसमं ध्रुवं मतं विनेह भक्तिं खलु पारमार्थिकीम् ।
सहानया दुःखमपारमुत्तमाः सुखप्रकर्षेण समं पुनर्विदुः ॥ ३४ ॥
(अ.५) नृणां जनन्यादिषु भक्तिरुत्तमा प्रकीर्तिता सा यदि नैव संभवेत् ।
चिरंनिधानाद्विषयस्य वान्यथा तदावसादेद्विरहाम्बुधौ सुखम् ॥ ३५ ॥
न सिद्धधूर्तेषु तु भक्तिमात्मनो मनस्विनः संक्रमयन्ति कर्हिचित् ।
निवेशयन्ति प्रणयं महाशयास्तुरङ्गयोग्यं न खले खराधमे ॥ ३६ ॥

षष्ठाधिकरणमारचयति–

विषया नृपपित्राद्या भक्तेः सिद्धादयोऽपि वा ।
सिद्धादयोऽपि किं न स्युर्महात्मानो हि ते मताः ॥ १ ॥
विषया नृपपित्राद्याः किं सिद्धैर्वैञ्चकैरिह ।
अतो न सिद्धेषु जनो भक्तिं कुर्वीत धर्मवित् ॥ २ ॥

सूत्रे–विषयाधिकारिभेदादनेकधा ३-१-१३ । मातापितृगुरु-नृपदेवाद्यास्तद्विषयाः ३-१-१४ ॥

---

(पृ ६) जनस्य पित्रोरथवा प्रजेश्वरं तथा निजेष्वाचार्यपि स्फुटम् ।
निसर्गजा भक्तिरनन्यगामिनी न सिद्धपूर्वेषु विभूतिवाञ्छिषु ॥ ३७ ॥
न मूर्तपूर्वाणिमाद्यैश्वर्यसम्भ्रमं यस्य शिशोर्मनो भवेत् ।
कथं स नैसर्गिकभक्तिमस्मरन्विभूतिवादेषु मुधा निमज्जति ॥ ३८ ॥
चिरान्महादम्भपरान्वञ्चकतास्वशठान्मलक्लान्भिक्षुकतेषु कर्मसु ।
प्रतारकानुद्धतधर्मकञ्चुकान्समृद्धिकामो यत्नमापि नार्चयेत् ॥ ३९ ॥
स्मरन्भृगोः कीर्तिमलीढयशां हृदा न सिद्धपूर्वाश्च सदर्थकांस्तथा ।
नरोऽनुगच्छेत्परकं न कामयेदिहैव सद्यो यदि मोक्षविह्वलः ॥ ४० ॥
स्वार्थिकेच्छूनरहस्यया जनान्सुविद्यया वर्धयतो महामतीन् ।
निषेवते शास्त्रपराङ्मुखो भावुको न सिद्धपूर्वाग्निसभारसंनिभान् ॥ ४१ ॥
यथा स्फुलिङ्गस्य परीक्षया शुचेरमेचकस्य निखिलस्य जायते ।
परीक्ष्य शक्त्यादि निजं तथेशितं ततोऽवगन्तुं लघिमाद्यसंभवम् ॥ ४२ ॥
न मेचकत्वं दहनस्य जातुचिच्चासुराधाद्वियति प्रसर्पणम् ।
नरस्य नैवामरता न च ध्वने. सुवर्णवस्त्वारगजन्मदातृता ॥ ४३ ॥
चिरंतनाद्यादिव दिव्यदृष्टिता प्रमाणता तस्य च दिव्यदृष्टितः ।
इतोऽद्वये हन्त परस्पराश्रये चिरन्तनादानुररीकरोतु कः ॥ ४४ ॥

सप्तमाधिकरणमारचयति—

अधिकारः सुतादीनां हैतुकानामथापि वा ।
हैतुकानां भवेद्भक्तावधिकारः परैः सह ॥ १ ॥
भक्तिर्यज्ञो मतस्तत्र वणिजां नाधिकारिता ।
हैतुका वणिजो नूनं स्वपुण्यपणनोद्यताः ॥ २ ॥

सूत्राणि—सत्त्वोद्रेकवन्तः पुत्राद्या अधिकारिणः ३-१-१५ । हैतुकास्तदाराधकाश्चानधिकृता महाप्रमादादिदोषग्रस्तत्वात् ३-१-१६ । प्रमादादिर्ज्ञानाङ्कुरनाशो भक्त्यादिविरोधी ३-१-१७ । अहेतुकेष्वाराधने दृष्टदोषाविषयाधिकारिणो निःश्रेयसम् ३-१-१८ सहेतुकाराधने दृष्टिदोषात् उभयोर्विनिपातः ३-१-१९ । शाम्भली-गृहीतया प्रमदयेव प्रमादवत्या ३-१-२० ॥

यथोपाध्यायमपि कर्णगोचरे हन्तार्दितो न लभते हृतं हितः ।
विभूतिलुब्धो व्यथते तथा मुहुः श्रुतिं प्रयाति परमार्थनामनि ॥ ४५ ॥
(सू. ७) जनस्य सत्त्वातिशयेऽधिकारिता मताऽत्र भक्तौ न तु तद्विपर्यये ।
अदुष्टदृष्टेर्हि सुखाय चन्द्रिका विदूषितात्मस्य तु निष्फलैव सा ॥ ४६ ॥
चिरन्तनेष्वप्यतनेषु यो जनो विभूतिमिच्छत्युपहत्य भक्तिमान् ।
अभक्तिमानेव वणिक्स हैतुकः पणायितुं वाञ्छितवाणिमिच्छति ॥ ४७ ॥
अहैतुकी भक्तिरनुष्ठिता ध्रुवं समस्तकल्याणमयी सतां मता ।
अदृष्टदोषो हि गुरोस्तथात्मनः सदैव भक्तः कुशलं विधास्यति ॥ ४८ ॥
सदृष्टिदोषः खलशङ्कयाकुलैः पणायमानो विषयस्य चात्मनः ।
निपातमेयं स तथैव साधयेत्प्रमादमग्नः प्रमदाजनो यथा ॥ ४९ ॥

अष्टमाधिकरणमारभ्यते-

शून्यमूर्त्यादिपूजा वा सत्यस्यान्वेषणं तु वा ।
भक्तिः स्याद्वास्तवी शून्यपूजादिः सा विरागिणाम् ॥ १ ॥
शून्यपूजादि मूर्खत्वं सत्यस्यान्वेषणं तु यत् ।
विज्ञानस्यानुसारेण भक्तिः सा परमा मता ॥ २ ॥

सूत्रे-परमार्थभक्तिर्महिम्ना प्रमादविरोधिनी ३-१-२१ । भक्त्यन्तरमाभासकं विना ३-१-२२ ॥

नवमाधिकरणमारभ्यते-

स्वस्वाकारभृतो देवा निराकारास्तु वा मताः ।
सर्वे प्राणिशरीरादौ न स्वाकारा अचेतनाः ॥ १ ॥

अतो जनः सिद्धिविभूतिशर्मलोभनेऽभ्यसमानोऽपि भक्तिमान्सन् ।
निवेशयेत्सिद्धविटे न जातुचित्कुलेऽन्यथा स्याद्विपुलो ह्युपप्लवः ॥ ५० ॥
(अ० ८) स्थिरां दधानेन विमुक्तिहेतुकां जनेन भक्तिं तदृणस्य शुद्धये ।
परोक्षमार्गेण चिरन्तनोऽगिरो निधीयतां त्रिंशतरस्य महात्मनः ॥ ५१ ॥
महौषधं हेतुकतामहारुजः प्रमादकुष्ठस्य रसायनं शिवम् ।
सुदोहदः सत्यपादपश्रियां परात्र भक्तिः परमार्थगामिनी ॥ ५२ ॥
क्रियाः समस्ता निखिलाश्च भक्तयस्तथाखिलं ज्ञानमनर्थकारणम् ।
विनात्र भक्तिं परमार्थगामिनीं तयाहि सर्वं भवति महार्थकम् ॥ ५३ ॥
(अ० ९) मनोभिवद्धा मदमत्सरादयस्त्वहितप्रधानाः प्रकृतेश्च शक्तयः ।
कपालभस्मोरगसंग्रहादयो नृणां तथादर्शविशेषकल्पनाः ॥ ५४ ॥
सरित्समुद्राम्बुदपादपादयः पतङ्गसारङ्गसरीसृपादयः ।
ज्वरातिसारादिकजन्तवश्च कल्पिताः सुरासुरत्वेन पुराणपण्डितैः ॥ ५५ ॥

सर्वे भवेयुः स्वाकाराः सूर्यादेः प्राणिता नवा ।
नाकारहीनता वापि सामञ्जस्यवती यतः ॥ २ ॥

सूत्राणि–मात्रादयः प्रसिद्धाः ३-१-२३ । देवासुरा वृत्तिशक्त्यादर्शकल्पनाद्याः । ३-१-२४ । नराद्याकृतिरुत्प्रेक्षा तथानाकृतिः ३-१-२५ । न नियता नाव्याहता न च माहात्म्यप्रयोजिका ३-१-२६ ॥

जनेन सर्वात्मनि वा परेषु वा सुरेषु किं वाप्यसुरेषु कल्पिता ।
घनाकृतिः प्राणिसमाकृतिस्तथा कथञ्चिदस्तीति मतं विपश्चिताम् ॥ ५६ ॥
न भास्करेऽधिप्रयुतायनांशमे न चापि शक्रे विलसत्तडिन्मये ।
न वा गिरीशात्मनि चन्द्रशेखरे नराकृतिर्नाकृतिशून्यतापि वा ॥ ५७ ॥
न कल्पितैर्बिन्दुभिरत्र निर्मितं घनात्मकं वस्तु विदन्ति तद्विदः ।
घनात्पृथक्कृत्य तु शब्दमात्रतस्तलादिबिन्दून्समतं प्रकल्पयेः ॥ ५ ॥
न शब्दमात्रेण तु वस्तुनिश्चयः स्वतन्त्रया वस्तु परीक्षया हि सः ।
अनेन वन्ध्यातनयाभ्यधायिना भवांश्च वन्ध्यातनयो भविष्यति ॥ ५९ ॥
न दृश्यमाकारमिहास्ति वस्तुतः समस्तमप्याकृतिमत्समीक्ष्यते ।
न दैर्घ्यविस्तारगभीरतोज्झिते गुणास्तु कश्चित्क्वचनोपलभ्यते ॥ ६० ॥
विपन्मुखं दुःखमवेदनां सुखं गुणाः सदाग्निः प्रतिपद्यमानं तथा ।
न दैर्घ्यविस्तारगभीरतामयं घनत्वमेतान्यपि जातु मुञ्चति ॥ ६१ ॥
घनत्वमेवाकृतिरत्र संमतानपेक्ष्यमस्याः स्फुटमन्तदर्शनम् ।
तदैव सर्वं स्थितमेतया यतः किमङ्ग तद्वस्तु भवेदनाकृति ॥ ६२ ॥
घनस्य दैर्घ्यादिमयस्य केवलं यथांशमंशानपि वा पृथक् पृथक् ।
विभज्य शब्देन जनः प्रकल्पयेत्तलानि रेखामथ बिन्दुमेव वा ॥ ६३ ॥

दशमाधिकरणमारचयति–

शिल्पशास्त्रप्रचारेऽपि प्रासादादौ महान्व्ययः ।
कार्यो न वा, कार्य एव देवमन्दिरभक्तितः ॥ १ ॥
देवमन्दिरनाम्नापि ख्यातं विद्याविवर्जनात् ।
श्मशानमेव तद्दूरान्मानवः परिवर्जयेत् ॥ २ ॥

सूत्राणि—महिष्ठा सरस्वती ३-१-२७ । तदाराधनं परमार्थभक्तिसमम् ३-१-२८ । सर्वजनन्यपि पैशाचैः कुपुत्रैरुपेक्षिता

---

तथैव सत्तामपि तार्किकाङ्कुरो निराकृतिं कल्पयतीह वाग्मिनाम् ।
प्रसह्य भिक्षुः परिगृह्यतामथ प्रपञ्चहेतुत्वपदैर्भविष्यति ॥ ६४ ॥
परस्परव्याहतकल्पनाकुला घनाकृतिस्त्रीपुरुषाकृतिप्रिताः ।
कुतर्कणादेव विशेषगोचरा महत्त्वमेषां न हि ताः प्रयुञ्जते ॥ ६५ ॥
( अ० १० ) सुरेषु सर्वेषु सरस्वती किल श्रुता महिष्ठा सकलोपजीविता
फलं तदाराधनमखिलं नृणां तदीयभक्तिः परमार्थसेवनम् ॥ ६६ ॥
पिशाचपुत्रामणिमादिदायिनी प्रपद्यमानैः कुसुतैरुपेक्षिता ।
फलानपेक्षैरुदयन्महाफलैः श्रिता सुपुत्रैर्जयतीह भारती ॥ ६७ ॥
वसूनि वाञ्छन्नपि सिद्धिलोलुपः पतत्यवश्यं निरये विपन्मये ।
अमून्यवाञ्छन्नपि शास्त्रसेवया प्रयाति संपत्तिमिहाद्भुतां कृती ॥ ६८ ॥
सरस्वती यत्र न यन्त्रपुस्तकप्रधानविस्तारितसाधनैर्जनैः ।
निषेव्यते चैत्यमनार्यसेवितं तदुच्यते नैव तु देवमन्दिरम् ॥ ६९ ॥
न यत्र शास्त्राणि न शिल्पसंततिर्न यत्र च छात्रकुलं सुलक्षणम् ।
विपश्चितो यत्र न विश्रुतात्मनः श्मशानतुल्यं तदवेहि मन्दिरम् ॥ ७० ॥

तृतीयाध्याये द्वितीयाह्निकं प्रथमाधिकरणमारचयति -

वस्तुस्वभावापेक्षाणि भिन्नान्याराधनानि वा ।
प्रतीकादिप्रपञ्चैर्वा वस्तुवृत्तानपेक्षिभिः ॥ १ ॥
प्रतीकादिप्रपञ्चैः स्युस्तथा प्रायोऽत्र दे[illegible] ।
वस्तुस्वभावापेक्षित्वाद्भिन्नान्याराधनानि तु ॥ २ ॥

सूत्राणि—आराधनानि ३-२-१ । यज्ञो देवानां वाणिज्यमिश्रः ३-२-२ । व्याहृताननुसरणं परमार्थस्य ३-२-३ । विज्ञानप्रचारो महायज्ञः सरस्वत्याः ३-२-४ । साक्षादुपासनं पित्रादीनां संनिकृष्टानाम् ३-२-५ । असंनिकृष्टानां ध्यानादि ३-२-६ । तत्रोपयोगः प्रतीकपुस्तकादीनाम् ३-२-७ । सच्चरितानुकरणं महापुरुषाणां

(प. ५) इति वीक्ष्य सुरान्सरस्वती-प्रभृतीनर्चयतां विपश्चिताम् ।
अमुरं व्ययहेलनावतामयमाराधनविस्तरो मुदे ॥ १ ॥
जगदभ्युदयाय सर्वतः समयोगेण समाहृतैस्तथा ।
जनतासु मुहुः प्रचारितैर्विविधैः शिल्पकलादिभिः शिवैः ॥ २ ॥
कविराध्ययनादिमन्दिरं परितश्छात्रनिवाससमण्डिते ।
महनीयतमां सरस्वतीं महतार्चन जनः समर्चयेत् ॥ ३ ॥
जननीं जनकं गुरूंस्तथा पदसंवाहनभोजनादिभिः ।
भजति स्वयमेव यत्रवानभिगम्यावहितो जितश्रमः ॥ ४ ॥
अभिगम्य पुनः स्वयं यदा न समाराधयितुं क्षमेत तान् ।
स्मरणादिभिरेव साधुभिः शमयत्युत्सुकतां हृदस्तदा ॥ ५ ॥
स्मरणाद्युपयोगि पुस्तकं प्रतिमां लक्ष्म तथा परं भजन् ।
विरहेष्वनुपेक्षितक्रियोऽवविधस्यं गुरुमर्चयेज्जनः ॥ ६ ॥

तथा च तैत्तिरीयाः ३-२-८ । आज्ञापालनं शास्त्यभक्त्यं नृपाणा-म् ३-२-६ । स्वाध्यायाद्याचार्यस्य ३-२-१० । होमादिः सूर्यादी-नाम् ३-२-११ । सर्वे इमे देवाः सर्वश्चायं यज्ञो व्यक्त्यर्थबाधा-त् ३-२-१२ । एवमन्येषाम् ३-२-१३ ॥

द्वितीयाधिकरणमारचयति-

विषयो नवधाभक्तेर्नियतो वान्यथापि वा ।
सर्वत्र नवधाभक्तिर्नियमस्तत्र नेष्यताम् ॥ १ ॥
वस्तुवृत्तानुसार्येव इष्टमाराधनं यतः ।
आराधनत्वान्नियमः श्रवणादावपीष्यते ॥ २ ॥

सूत्राणि—श्रवणं कीर्तनं वन्दनं चोभयथा ३-२-१४ । स्मरण मसंनिकर्षे ३-२ १५ । चरणसेवनं दास्यं च संनिकर्षे ३-२-१६

---

अपचारमसद्वचस्तथा विनिरस्याकलितेन चेतसा ।
चरितानि वचांसि चाश्रयेदनवद्यान्यनिशं महात्मनाम् ॥ ७ ॥
इह [illegible]कलादिविद्यया सततं सेवितया महोद्यमः ।
कितवोऽप्युपभक्तिरर्चयेद्गुरुराचार्यमहार्यनिश्चयः ॥ ८ ॥
विनयेन सदैव वर्तयन्नमात्यासु कदाचिदस्खलन् ।
अपरिक्षतशान्तिरात्मवान्विषयं तोषयति प्रजावकान् ॥ ९ ॥
पयसालिगुडाज्यपायसैर्घनसारागुरुधूपवन्हनैः ।
अधियाह्नि हुतैर्जनोऽर्चयेद्रविपर्जन्यमरुन्मुखान्सुरान् ॥ १० ॥
उदिता इति देवता इमा इह यज्ञस्तदुपासना मता ।
अयमभ्युदयार्थमात्मनः स्तुतिरर्थस्य हि यज्ञ उच्यते ॥ ११ ॥

अर्चनमनेकधा प्रतीकनीये प्रतीके च ३-२-१७। सख्यं समानयोरुभयथा ३-२-१८। आत्मनिवेदनं जायापत्योः ३-२-१९ ॥

तृतीयाधिकरणमारचयति-

दृष्टो नवाधिकारादेर्विप्लवाद्भक्तिसंश्रयः ।
दृष्टो यस्माद्विरागार्तैः स्त्रीलक्ष्मादीह धार्यते ॥ १ ॥
स्त्रियः स्त्रीत्वेन पुंसश्च पुंस्त्वेनैवेष्यते यतः ।
तादृशो भक्तिरिष्टेति नाधिकारादिविप्लवः ॥ २ ॥

सूत्राणि—फलाय लक्ष्मादिसेवनं दम्भादज्ञानाद्वा ३-२-२०। नामफलादि तामसानाम् ३-२-२१। विपर्यासः प्रमादवतां स भक्त्याभासस्तदनुराराधनं व्याहतानुसरणात् ३-२-२२ ॥

---

(भ० २) मुनिभिर्नवधान्यसंनिहिते संनिहितेऽपि वस्तुनि ।
स्मरणं पुनरत्र युज्यते समुपास्ये सविधानुपस्थिते ॥ १२ ॥
सविधस्थित एव संमता चरणोपास्तिरथापि दासता ।
अनुयोचितमर्चनं भिदामनुगच्छद्द्वयस्य सर्वदा ॥ १३ ॥
समयोरिह सख्यमात्मनोऽर्पणमिष्टं किल भर्तृभार्ययोः ।
अनपेक्ष्य फलं कृतात्मभिः कृतिभिर्भक्तिरितीयमादृता ॥ १४ ॥

(भ० ३) अथ हेतुमपेक्ष्य यज्जनः प्रतिमाद्याङ्घ्रमुखादि सेवते ।
नहि भक्तिरियं विमूढता महती दम्भविजृम्भणाथवा ॥ १५ ॥
इह भक्तिमुपयन्ति तामसा अधिकारादिविपर्ययेण ये ।
असुरान्मदमत्सरादिकान्मतिहीनाः परितर्पयन्ति ते ॥ १६ ॥
पितरो द्विजतः सदाचारितामुखतः शिष्टविदूषणर्तिभिः ।
इदमीरयतः सरस्वतीमभिचारादिविधानसेविनः ॥ १७ ॥

चतुर्थाधिकरणमारचयति –

सर्वात्मनः प्रतीकाद्यैर्भक्तिर्धर्मेण वा भवेत् ।
विरज्य सर्वतः कार्यात्प्रतीकाद्यैस्तु सा भवेत् ॥ १ ॥
सा सेवाविधिधर्मेण सेवा भगवतो मता ।
न मृन्मयस्तवमूर्त्यादि-पूजनैः सा भविष्यति ॥ २ ॥

सूत्राणि—धर्मो मूलं सर्वात्मनो देवदेवस्य ३-२-२३। धर्मः सत्यं धारणात् ३-२-२४। धर्म आत्मनः प्रतिकूलस्यान्यस्मिन्नन-

---

परिहृत्य विपश्चितां सतां श्रुतमार्गानुगतम्मुमुक्षुकाम ।
शिशुरप्यवधानयाऽकथं सुरभक्तामभिधातुमर्हति ॥ १८ ॥
(च. ४) अपरेष्विति कीर्तितः सुरेष्वयमाराधनविस्तरः स्थिरः ।
सकलात्मनि दैवतोत्तमे ननु धर्मार्चनमेकमिष्यते ॥ १९ ॥
परिहात्मनि वा परत्र वा परमं सत्यमसत्यवर्जितम् ।
मनसा वचसाथ कर्मणाऽनुगमस्तस्य तु धर्म उच्यते ॥ २० ॥
अनुवृत्तं जगत्सदा परिशीलितमुमन्तरेण यत् ।
तदमुं प्रवदन्ति शाश्वतं किल धर्मं पथिता विपश्चितः ॥ २१ ॥
यदथात्मनि वा परेषु वा सदसत्त्वादिविभूतिकल्पनम् ।
तदनुष्ठितमेव कर्म च स्फुटमाख्यातमधर्म इत्यदः ॥ २२ ॥
अनुपायपरः कुमारिकाकुलसंदूषणपातकी पशुः ।
स्वयमार्तं जनश्च धारयन्निति बीभत्सविकर्मकर्मठः ॥ २३ ॥
विपदुद्दहनादिवाञ्छया सुरगन्धर्वविहङ्गयापि वा ।
अपि राघववासुदेवयोर्वसुधायामवतारणाय वा ॥ २४ ॥

पञ्चमाधिकरणमारचयति-

शिखासूत्रादिराचारः पालनीयोऽथवा नवा ।
कस्तस्य पालनेनार्थः फलं स्वर्गादिकं न चेत् ॥ १ ॥
स्वाम्नोक्तमीदृशं मया पालनीयमहैतुकैः ।
हेतुदृष्ट्या पालयंस्तु मूर्खेषु गणनां वहेत् ॥ २ ॥

सूत्राणि—प्रवर्त्तमान आचारो धर्म इत्येके ३-२-३०। तस्याम्नोक्तस्य हेत्वविरुद्धस्यानुष्ठानं विधित्वात् ३-२-३१२। अन्यथैवास्तोन्यं तत्र विध्याभासे प्रमादवद्भिरनुसृते ३-२-३२। सविषयः स्वस्वस्मृतीनां पित्राद्याम्नायाश्चेति तत एवावगन्तव्यः ३-२-३३ ॥

इति तृतीयाध्यायस्य द्वितीयाह्निकम् ॥

---

परधर्मविवर्जनं तथानुगतिर्धर्मपरायणा सदा ।
इदमेकमुपासनं मतं ननु विश्वात्मनि भूम्नि चिन्मये ॥ ३४ ॥
नियमस्य यथानुपालनं परमेशाप्तिरिह प्रशास्तरि ।
अखिलात्मनि धर्मपालनं परमाराधनमिष्यते तथा ॥ ३५ ॥
इत्थंच भूमनि चिदात्मनि विश्वरूपे निष्पन्नपातविमलं सकलार्द्धयुक्ते ।
आराधनाविधिरवाचि नितान्तकान्तः शान्तात्मनामभिमतः स्थिरधर्मरूपः ॥ ३६ ॥
(३०५) आचारजालमपि देशकुलाद्यधीनं धर्माख्यया कतिविदाहुरदोषजुष्टम् ।
कालेन तस्य परिवृत्तिरशाश्वतस्त्वमस्मा प्रयोजयति सत्सुधियो विदन्तु ॥ ३७ ॥
आम्नोदितं तु विधिरूपतयानपेक्ष्य हेतूनशाश्वतमपि स्फुटमाचरन्ति ।
आचारजालमपदेऽपमदुष्टभावा भक्त्या पितृव्रय समाजभयेन चापि ॥ ३८ ॥
ये कालिकाः श्रिविकपेव करस्य यात्रा भावेन संततिमिहावहतीतिविद्युः ।
ते हैतुकास्तु वणिजो गगनारविन्दं विक्रीय संपदमुपान्ति विपत्फलाय ॥ ३९ ॥

इति तृतीयाध्यायस्य द्वितीयाह्निकम् ॥

# चतुर्थाध्याये प्रथमाह्निकम् ।



चतुर्थाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति—

सम्बन्धो ज्ञानविषयः स्वभावो वापि तादृशः ।
सम्बन्धविषयं ज्ञानं स्वभावो नावबुध्यते ॥ १ ॥
ज्ञानं स्वविषयं यत्तत्स्वभावविषयं स्फुटम् ।
सम्बन्धस्तु तदंशानामुभयं विषयोऽस्य तु ॥ २ ॥

सूत्राणि— हेतुमदहेतुकं कर्मात्मकम् ४-१-१ । तत्र ज्ञानाङ्कुरमात्रमपेक्षितम् ४-१-२ । प्रकृतिविज्ञानविक्रियासापेक्षं ममत्वलेशात्कर्म ४-१-३ । ज्ञानं स्वभावसम्बन्धावगाहि ४-१-४ ॥

द्वितीयाधिकरणमारचयति—

शास्त्रेण चित्तसंस्कारो मन्त्रभावनया तथा ।
द्रव्यादिसाधनं किं वा, सिध्येद्द्रव्यादि निश्चितम् ॥ १ ॥

---

( सू. १ ) हेतुमदहेतुकं चेत्युक्तं कर्म द्विधा पुरम् ।
आद्यं यन्मुख्यमेकं परं तु भक्तिप्रधानं स्यात् ॥ १ ॥
यस्याङ्कुरांशविद्या-विक्रियासापेक्षमत्र स्यात् ।
तत्सति ममतालेशे कर्माचारमिति पुनर्ज्ञानम् ॥ २ ॥
निष्कामकर्मभक्तिद्वयं ज्ञानस्य निर्मलत्वं मत् ।
मुख्यं कर्माचारः सन्मतं कामयत्र सततम् ॥ ३ ॥
भक्तिपरं कर्म चेति द्वयं पुनर्ज्ञानपरिनिष्ठम् ।
वस्त्वनुपदमेतज्ज्ञानं कर्मात्र तु प्रपञ्चयति ॥ ४ ॥

शब्दाद्भावनया वापि द्रव्यसिद्धिरसंगता ।
तस्माच्छास्त्रीयतत्त्वज्ञश्चेत: संस्कुरुते परम् ॥ २ ॥

सूत्राणि—संग्रहाय शास्त्रापेक्षा ४–१–५ । शास्त्रं मन:संस्कारकम् ४–१–६ । न शब्दो न च मनोविकारो द्रव्यमुत्पादयति साक्षात्परिवर्त्तयति वा ४–१–७ । स्पष्टं तदारुणेरादेशमनुसरताम् ४–१–८ ॥

तृतीयाधिकरणमारचयति—

श्रुत्यादिशास्त्रे सकला विषया अल्पकास्तु वा ।
श्रुत्यादि दिव्यशास्त्रं यत्सर्वज्ञाननिधिस्तत: ॥ १ ॥
शास्त्रस्य दिव्य: सत्योंश: को विरोध: श्रुताविह ।
ज्ञानस्य न परिच्छेद: शास्त्रमल्पावगाह्यत: ॥ २ ॥

---

अंशानां प्रकृतेर्व्यावृत्तानं कर्मणोऽपेक्ष्यम् ।
तत्स्यात्स्वभावविरुद्धं संबन्धं चावगाहेत ॥ ५ ॥
( ७० २ ) भूतं यन्मतेनेतन्मूर्तामूर्तं प्रकृत्याख्यम् ।
विज्ञानमखिलमस्माच्छ्रोत्रानां संशयो नात्र ॥ ६ ॥
यावत्तु पूर्वजानां विज्ञानं तस्य संग्रहे विहिते ।
तदुपचयं साधयितुः शास्त्रेर्म महान्व्ययो भवति ॥ ७ ॥
तस्मादतत्त्ववर्जन-पुरःसरं तत्त्वसंग्रहायात्र ।
पूर्वजशास्त्रापेक्षा न तु शास्त्रमशक्यमत्र निर्मातुम् ॥ ८ ॥
मनसः शास्त्राभ्यासैः संस्काराख्यं फलं साक्षात् ।
शब्दैर्भावनया वा न द्रव्योत्पत्तिपरिवृत्ती ॥ ९ ॥

सूत्रे—शास्त्रविशेषाणां विषयनियमः ४-१-९ । विषयान्त रस्पर्शे तत्तच्छास्त्रेण पूर्तिर्यथा भक्ष्यादौ धर्मसंहितायाः ४-१-१०

चतुर्थाधिकरणमारचयति—

हरेः स्तम्भोद्भवत्वादि-कथा अत्युक्तयो मता ।
नात्युक्तयश्चिरत्नानां भक्त्या वाक्युक्तिता यतः ॥ १ ॥

---

मत्स्याण्डमेकमपि यः परीक्षते मन्यते सर्वेष्वखिलम् ।
एकं परीक्ष्य शास्त्रं शास्त्रप्रकृतिं तथैव जानीमः ॥ १० ॥
तत्त्वातत्त्वविवेकं विधाय यत्नेन शास्त्रेभ्यः ।
कार्योऽत्र तत्त्वसंग्रह उपेक्षितव्यं तु यदतत्त्वम् ॥ ११ ॥
( अ० ३ ) तत्रापि यस्य विषयो यः स्याच्छास्त्रस्य तस्य तत्रैव ।
प्रामाण्यसंभवः स्यात्प्रायो नान्यत्र विषये तु ॥ १२ ॥
स्पृष्टे तु भिन्नविषये तत्तच्छास्त्रेण पूर्तिः स्यात् ।
भक्ष्याभक्ष्यविचारे स्मृतेर्यथा वैद्यशास्त्रेण ॥ १३ ॥
( अ० ४ ) एका स्वभाववर्णन-शैली रूपकमयी द्वितीया स्यात् ।
अत्युक्तिस्तु तृतीया वाचोयुक्तिस्त्वर्थात्युक्ता ॥ १४ ॥
तरवो लतावृता इति तरुपृक्ता वल्लिवनिताभिः ।
श्लिष्टा इति पुनरिह वनिताश्लिष्टा इति क्रमशः ॥ १५ ॥
तदुदाहरणान्यत्र प्रथमा वैज्ञानिकी शैली ।
प्रायो वैदिकशैली दृष्टा रूपकमयी कविभिः ॥ १६ ॥
पौराणिक्यत्युक्तिमयी तनुते प्रभावदवस्तुतत्त्वम् ।
अस्या स्वभाववर्णन-शैलीं तां मोहमेति जनः ॥ १७ ॥

व्याहते न कथञ्चिद्क्रुद्धा चिरत्ने वा नवेपि वा ।
तस्मादत्युक्तयः सर्वे बाह्या एतादृशा इह ॥ २ ॥

सूत्रम्—स्वभावोक्तिरूपकात्युक्तिभेदाद्वाक्यार्थानवगतिः४-१-११॥

पञ्चमाधिकरणमारचयति—

ऋषीणां सर्वदर्शित्वं केषामप्यस्ति वा न वा ।
अस्त्यप्रतिहता तेषां दृष्टिः सर्वार्थदर्शिनी ॥ १ ॥
कस्यापि नेदृशी दृष्टिः सर्वो हि मितदृष्टिकः ।
परीक्ष्य प्रकृतेस्तत्त्वं नवं जानन्नृषिस्ततः ॥ २ ॥

अश्वत्थादिरूपणं यद्विरिञ्चिकरणादिषु कृतं वेदे ।
किरणादिविनिगरणात्सैवात्युक्तिः पराणेषु ॥ १८ ॥
कफपूयमूत्रशोणितसगूणाढ्यं यन्मृतेः पूर्वम् ।
वैतरणीनिरयाख्या तस्यात्युक्तिस्तथैव विज्ञेया ॥ १९ ॥
धनिनो हिरण्यशयने दण्डः स हिरण्यकशिपुसमाख्यः ।
वनदाहकार्यशक्त्या वडवां मथितादिविनिर्गतः ॥ २० ॥
सर्वे पुराणकर्तृभिरत्युक्त्या हन्त परिणमितम् ।
नरनार्यादिकथामयमुदितं महता प्रपञ्चेन ॥ २१ ॥
इंद्राहल्याकथादौ मिथ्यानहुषस्य व्याख्याने ।
पाषण्डपुस्तकेषु च वन्यकथासु च बहुः प्रपञ्चोऽस्ति ॥ २२ ॥
सभ्याः कथाप्रपञ्चानेतान्मनसो विनोदाय ।
शृण्वन्ति न पुनरीदृशमत्युक्तिं वास्तवीं प्रगल्भन्ते ॥ २३ ॥
मूर्खास्तु वचनसृष्टिं कन्यायाः सिंहनिर्गमं स्तम्भात् ।
भूकुंभरूपमधुनापि रामहस्त्वं भ्रमद्भूमौ ॥ २४ ॥

सूत्राणि—ऋषित्वमनधिगततद्दर्शित्वं तत्तद्विषये ४-१-१२ । तदद्भुतं प्रकृतिवशताफलम् ४-१-१३ । सा मन्त्रदर्शिता मन्त्राणां नवाविष्कृतरहस्यपिशुनत्वात् ४-१-१४ ॥

षष्ठाधिकरणमारचयति—

निगमागममन्त्राणां पाठाच्चित्रं फलं न वा ।
पाठाद्वृष्ट्यादिकं चित्रं फलं दृष्टं महात्मभिः ॥ १ ॥

---

अवतारवानकैः सह संभाषां विकटपोटानाम् ।
विद्युत्संक्रममेवं पतद्भुताम्बुस्तंभकानाम् ॥ २५ ॥
नास्तिकमेतत्सर्वं प्रख्याप्य जनेषु मुग्धेषु ।
परमार्थनाशनपराश्चरन्त्यधन्यामिमां भूमिम् ॥ २६ ॥
दृष्ट्वा पुराणवचने नानान्विश्वासमापन्नान् ।
विश्वासयन्ति कितवाः स्त्रीषु जुगुप्सितव्यमर्त्येषु ॥ २७ ॥
(अ० ५) यावत्पूर्वाधिगतं तस्मादपि वस्तुनोऽधिगमः ।
प्रकृतिपरीक्षाविधिभिस्तत्तद्विषये ऋषित्वं स्यात् ॥ २८ ॥
तत्र परीक्षाशक्तिर्भक्तिः सत्येऽनृताज्जुगुप्सा च ।
पूर्वजसंक्रान्ता च प्रतिभावस्यानुकूल्यं च ॥ २९ ॥
साधनमीदृगपेक्ष्यं न पुनर्जन्मान्तरीयसंस्कारः ।
दैवविशेषकृपा वा मन्त्रजपादिप्रपञ्चो वा ॥ ३० ॥
आध्यात्मिकतादृक्षः समाधिमूर्च्छानिपातो वा ।
परचिन्त्यासंक्रान्तिः प्रतीकचरणादिसेवा वा ॥ ३१ ॥
मन्त्रा वाक्यानि नवाविष्कृततत्त्वस्य सूचकानि यतः ।
तादृक्तत्त्वालोकनमिष्टं किल मन्त्रदर्शनं सुधियाम् ॥ ३२ ॥

शब्दपाठात्फलं नेदृक् तस्मात्कार्योपयोगिता ।
मन्त्राणामिति सिद्धान्तः किं शुष्कैरत्र चर्वणैः ॥ २॥

सूत्राणि—ते स्पष्टार्थबोधकाः सांकेतिकाश्च ४-१-१५ । विध्युपयोग्यर्थबोधकत्वेन तदुपयोगः ४-१-१६ । क्रियानुपयोग पाठो निष्फलो विशेषतोऽर्थाग्रहे ४-१-१७ । रसादिबीजत्वेन सांकेतिकानां विध्युपयोगः ४-१-१८ ॥

सप्तमाधिकरणमारभते—

संस्कृतेनात्र चित्तेन सिद्धिः संकल्पजा नवा ।
अस्ति संकल्पजा सिद्धिरीशाद्याकृष्टिकारिणी ॥ १ ॥

---

(अ० ४) मन्त्रा द्विविधा दृष्टाः केचित्स्फुटमर्थबोधका यथा श्रुतिषु ।
सांकेतिका इहान्ये विदिता नागार्जुनादिलेखेषु ॥ ३३ ॥
तत्रोपयोग उक्तः प्रीतानामर्थमन्यनादिकार्येषु ।
हुं फ्रोमित्यादीनां विधादियोगप्रकारेषु ॥ ३४ ॥
अर्थानपेक्षशब्दाम्रेडनमात्रं तु निष्फलं नूनम् ।
किंत्वा परप्रतारणमात्रफलं रामनामघोषणवत् ॥ ३५ ॥
रामेति यथा घुष्यन्मोदकमाकर्षति स्वयमेव ।
मन्त्राडम्बरकुशलस्तथैव मुग्धान्स्वलोभयति ॥ ३६ ॥
उपदिश्य धार्मिकं व्रते यथा किल भिक्षुधूर्ताः ।
अङ्के श्यपेन महता त्रिदधुर्भवजाविनेपनं सुचिरम् ॥ ३७ ॥
एवं मान्त्रिककितवा विषयोगैर्मारणादि कुर्वाणाः ।
मन्त्रस्य तर्पणाद्यैः सिद्धिं विदधुः परान्मतारयितुम् ॥ ३८ ॥

अष्टमाधिकारमारचयति—

आरब्धारम्भयोः कश्चिद्गुणभेदो भवेत्तथा ।
गुणभेदो न भवति कार्यकारणयोः क्वचित् ॥ १ ॥
दृष्टस्तुलादिसाम्येपि गुणभेदो महानिह ।
वायुद्वयस्य संयोग-विशेषेभ्यस्समुद्भवात् ॥ २ ॥

सूत्राणि—सति द्रव्ये तूभयथान्यथा ह्रासह्रासापत्तिः ४-१-१२ । न नूतनमन्यत्र तत्त्वयोगात् ४-१-२२ । तत्रापि तुलादिसाम्यम् ४-१-२३ । अघटितत्वेन ज्ञानं तत्त्वम् ४-१-२४ ।

---

ख्यातो भारतवासी कलाकुमारः कलाध्यक्षः ।
आचार्यो वा दर्शन-काव्यादेर्नश्यति प्रायः ॥ ४८ ॥
(अ० ८) भावनया वा शब्दैरपि वा द्रव्यस्य नोत्पत्तिः ।
द्रव्याणामिह योगाद्द्रव्यं घटकैर्हि सदृशं स्यात् ॥ ४९ ॥
योगेपि तु नाभिनवं कार्यमिहान्यत्र तत्त्वयोगात्स्यात् ।
तत्त्वानामपि योगे न तुलादौ भवति परिपूर्तिः ॥ ५० ॥
तत्त्वान्यत्रोपगतान्यस्यावधि निश्चितानि विद्वद्भिः ।
अघटितमिति यज्ज्ञातं तत्त्वं तत्संमतं सुधियाम् ॥ ५१ ॥
अघटितमिति यत्संप्रति विज्ञातं तस्य घटितत्वम् ।
अम्बुन इव संभाव्यं वायुद्वययोगघटितस्य ॥ ५२ ॥
घटनादि निश्चितं यस्यावसेनोत्तरं कार्यम् ।
अद्भुतमिह घटते यत्तस्माद्विज्ञानमिदमेव ॥ ५३ ॥
भ्रान्तिमिह विज्ञानं किमपीति ज्ञानमेव विज्ञानम् ।
प्रथमं तेन विनायं मनुजः पशुरेव विज्ञेयः ॥ ५४ ॥

नवमाधिकरणमारभते—

निराकारात्समुद्भूतं साकारं सकलं मया ।
निर्गुणाच्च निराकारादीशात्सर्वसमुद्भवः ॥ १ ॥
निर्गुणं च निराकारं तत्त्वं नास्तीह किंचन ।
तत्त्वाकारे त्वसद्भावः कार्यं त्वाकारविप्लवे ॥ २ ॥

---

भ्रान्तिमपि च विज्ञानं योगादाप्ति प्रपद्य मेधान्धः ।
विज्ञानस्य विशुद्धौ न चेष्टते तत्र हतबुद्धिः ॥ ५५ ॥
वेदादौ विज्ञानं पूर्णं परिशुन्तिरहितं च ।
शिल्पकलागणितादिकमपूर्णमेवेह सर्वमिदम् ॥ ५६ ॥
मूर्खाणां प्रतिपत्तिर्वेदाद्यविज्ञानतामेव ।
न हि विज्ञानं वैदिकमर्वाक् वा स्थिरं किञ्चित् ॥ ५७ ॥
योगादरणिविमन्थात्स्वाध्यायानिलसंभवाच्च यथा ।
स्फुरकशलाकाघर्षाद्वै विज्ञानमात्रेऽपि ॥ ५८ ॥
न स्थिरता विज्ञाने मेधात्मादौ तथैकमत्य च ।
न तु तेन कार्यहानिर्विज्ञानवतां कदापि संभवति ॥ ५९ ॥
विज्ञानस्यापूर्तिं पश्यञ्ज्ञानमिच्छेत्कः ।
पद्भ्यां स्खलन मनुजः प्राणायामैः समुद्धयते ॥ ६० ॥
उपवासपरो मूर्खो विशर्करं भोज्यमुपहसतु ।
प्रतिवेशिजनस्य कथं नापत्रपया विहीनश्चेत् ॥ ६१ ॥
निर्विज्ञानः कथमिव विज्ञानमपूर्णमुपहसतु ।
संकल्पशिथिलधीर्मूर्खाणां चेत्प्रतारितो न भवेत् ॥ ६२ ॥
( अ० ९ ) साकारमेव सर्वं तस्माद्वैचित्र्यमेकमुपमत्य ।
वैचित्र्यान्तरमथाकारविमर्शात्समुद्भवति ॥ ६३ ॥

सूत्रे—सर्वस्य साकारत्वादाकारोपमर्दः सर्वत्र ४-१-२५ । न निराकारादाकारोद्भवः पुनरन्यसद्भावापत्तेः ४-१-२६ ॥

दशमाधिकरणमारचयति—

सर्वात्मा चेतनोयं वा स्याद्यथाचेतनोपि वा ।
भक्तानुग्रहकृत्याद्यैश्चेतनः स्यादसौ स्फुटम् ॥ १ ॥
अस्मिन्नवान्तरो भेदश्चेतनाचेतनाभिधः ।
तस्मादस्मिन्विकल्पोयं सर्वथैवासमञ्जसः ॥ २ ॥

सूत्र—अवान्तरभिदा चेतनाचेतनाख्या ४-१-२७ । चेतनस्योपायविकल्पा नत्वचेतनस्य ४-१-२८ ॥

---

आकारस्योद्भूतिर्न निराकारात्कथञ्चित्स्यात् ।
एवं स्वीकारं स्यादसत्समुद्भवकथा यस्मात् ॥ ६४ ॥
(अ० १०) प्रकृतौ साकारायां किञ्चिच्चेतनमचेतनं तु परम् ।
कस्मादयं न प्रकृतौ चेतनता तद्विपर्ययोप्यथवा ॥ ६५ ॥
यस्योपायविकल्पस्तच्चेतनमभिमतं विदुषाम् ।
यस्य तु नियतैव गतिस्तदचेतनमिष्यते जगति ॥ ६६ ॥
अपसोयस्कान्तं प्रति ऋजुरेवैका गतिर्नियता ।
नतु पार्श्वतो विमकुचनमथान्तास्यस्य तत्कुरुते ॥ ६७ ॥
तस्मादचेतनं तत्प्रियौलकश्चेतनस्तु मतः ।
योऽदृष्टात्स्वचकां गतिमनमवलम्ब्य यत्नेन ॥ ६८ ॥
भोगाराधैकचिते योगे सति जीवपुद्गले जाते ।
उज्झयति चेतनेयं नश्यति पुद्गलविघटने च ॥ ६९ ॥

एकादशाधिकरणमारचयति—

जन्मान्तराद्यदृष्टस्य दैवाख्या वा परस्य वा ।

दैवं जन्मान्तरादृष्टं तदधीनादृष्ट जन्तवः ॥ १ ॥

अयत्नसिद्धं दैवं स्याद्यत्नः स्यादिह पौरुषम् ।

फलमेतद्द्वयाधीनं निश्चितं सुधियामिदम् ॥ २ ॥

सूत्राणि—भूतभवतामयत्नसिद्धानां यत्नस्य च फलं भावि ४-१-२९ । अयत्नसिद्धं दैवं यत्नः पुरुषकारः ४-१-३० । उभयमपेक्षितं सर्वत्र ४-१-३१ ॥

---

सा बुद्धिर्वदनाकृति-शक्तिमयी केन्द्रमात्मीयम् ।

गच्छति निजेऽधिकारे यथाकथं चित्तवाधना ॥ ७० ॥

(अ० ११) भूतं भवच्च यावत्तदयत्नोपनतमेव स्यात् ।

दैवमथ पुरुषकारो यत्नः फलमेनयोर्भावि ॥ ७१ ॥

चेतनमचेतनं च प्रकृतावुभयं यतो दृष्टम् ।

न च सर्वज्ञः कश्चिद्विभाव्यते सर्वशक्तिर्वा ॥ ७२ ॥

नियमा ननु विनियम्या प्रकृतिर्दृष्टा यतश्चैषा ।

तस्मात्प्रकृतेर्भिन्नो न नियन्तास्यास्तु कोऽप्यस्ति ॥ ७३ ॥

यावच्च भक्तवर्यः प्रार्थनया चन्द्र सूर्यगतिम् ।

रोधयति तावदस्या न नियन्तान्योऽनुमेयः स्यात् ॥ ७४ ॥

वह्निर्दहत्यथैकं गिरिकाननपुरवरग्रामान् ।

अनियन्तृको नियन्तारि प्राप्ते चुल्लीमुखे वह्निः ॥ ७५ ॥

चुल्लीनियम्यतास्मेरिव मूर्खादेस्तु भक्तानाम् ।

प्रत्यक्षदर्शनीयः प्रार्थनयाऽऽस्तेऽद्विनियमः स्यात् ॥ ७६ ॥

द्वादशाधिकारमारचयति—

ज्ञानं परमहंसानां मूर्च्छाधैरद्भुतं नवा ।
मूर्च्छाधैरद्भुतं ज्ञानं इदमेव महात्मनाम् ॥ १ ॥
मूर्च्छाया ज्ञानशत्रुत्वं योगस्त्ववहितिर्मता ।
तत्तत्कार्ये फलोत्कर्षो योगादित्यतिरोहितम् ॥ २ ॥

सूत्राणि—योगमूर्च्छासमाध्यादि न संभाव्यं सर्वत्र संभवे

---

नूनं तदाभ्युपेयो विनियन्त्राण्यः प्रकृत्याः स्यात् ।
प्रह्लादादिकथाभ्यो न पुनर्विनियामकानुमितिः ॥ ७७ ॥
पत्युरसामञ्जस्यात्त्वकतेत्याद्वि कथयंस्तत् ।
अभ्युपगच्छति युक्तिभिरपि भगवान्बादरायणः स्पष्टम् ॥ ७८ ॥
मंगोह्ययत्नासङ्गो यत्नश्चापेक्षितं कार्ये ।
प्रथमो न स्वाधीनः कार्यं तस्माद्द्वितीयेन ॥ ७९ ॥
(अ० १२) व्याधिरपस्मारार्तिर्भङ्गामहिफेनमुख्यानाम् ।
गरलानां च निमित्तं मूर्च्छाया लिङ्गवस्तु मतम् ॥ ८० ॥
इंद्रङ्मूर्छादि जने संभाव्यं नैव सर्वत्र ।
यत्र तु दृष्टं तेषां न धीप्रकर्षाद्भुतो दृष्टः ॥ ८१ ॥
योगस्तु चित्तवृत्तिं निरुध्य कुत्रापि संगमनम् ।
अवधानेनाभिन्नं प्राणायामादि साधनं तस्य ॥ ८२ ॥
सत्यवधानेच्छात्रोभ्यासाभावादि आमोते ।
श्रेष्ठी मूलधनस्योपयोगतो बहु धनं भजते ॥ ८३ ॥
अन्येप्येवमवहिताः स्वं स्वं कार्यं विधाय साफल्यम् ।
यान्ति प्रकृष्टमेतद्विदुषामतिरोहितं सर्वम् ॥ ८४ ॥

वा निष्फलम् ४-१-३२। योगश्चित्तवृत्तिनिरोध इति पतंजलिः ४-१-३३। तस्यावधानरूपत्वात्सति तस्मिंस्तत्तत्कार्ये फलोत्कर्षः ४-१-३४। प्राणायामाद्यवधानमात्रसाधनम् ४-१-३५। समाधिस्तन्मयत्वम् ४-१-३६। तमश्चेष्टावागवधानानामुत्तरोत्तरमुत्कर्षः ४-१-३७॥

---

न पुनः प्राणनिरोधादपि वा मूर्छागमेन जनः
पठनं विनैव विद्वान्मूलधनाद्यन्तरेण धनिको वा ॥ ८५ ॥
योगोऽवधानमात्रं तस्य विशेषः समाधिः स्यात्।
स च तन्मयत्वरूपः परः प्रकर्षोऽवधानस्य ॥ ८६ ॥
मूर्छाकारः मूर्छां कुर्वन्स्वरयात्रया गतया।
पार्श्वकहास्तिकतीर्थिकसंमतयापि नाचिरात् ॥ ८७ ॥
नायं तस्य समाधिस्तेन महत्कर्मसाफल्यम्।
योगं कर्मसु कौशलमाहार्जुनसारथिर्भगवान् ॥ ८८ ॥
किञ्चिद्विद्वान्मतिस्तन्द्रां बहु मन्यते प्रायः।
शयनासनादिसौख्यं वाञ्छत्युद्योगमन्तरेण सदा ॥ ८९ ॥
दुःखाद्व्ययभयाद्वा यदि वाञ्छत्युद्यमं तु तदा।
छलवञ्चनं बहु मनुते न पुनः कष्टं गुरौ वासम् ॥ ९० ॥
विद्यार्थिनश्चरापि पुस्तकपठनजनमुखाञ्छब्दान्।
रटति प्रायो रसनामहर्निशं खेदयन्मूढः ॥ ९१ ॥
कश्चिद्धीर्दुर्बलो मननार्थचिन्तनेन पदे पदे सत्त्वम्।
भूयः परीक्षमाणः सुमहोद्योगः प्रयाति विश्वस्तम् ॥ ९२ ॥

अथोदशाधिकरणमारभते–

कीलनं किल शापो वा मन्त्राणां वार्थविस्मृतिः ।

शापः स्यात्कीलनं तद्धि प्रसिद्धं मन्त्रवेदिनाम् ॥ १ ॥

शापादि कल्पनामात्रं कीलनं त्वर्थविस्मृतिः ।

विषाद्यनुपयोगो वा राजदण्डादिभीतितः ॥ २ ॥

---

विज्ञाने प्रत्यूहा लोभाद्याः सुखहयस्त्व ।

सुमहान्प्रत्यूहोयं भक्तियां सिद्धकितवेषु ॥ ९३ ॥

हिमगिरिशिखरे दृष्टान्कलाकुमारीरपि प्रायः ।

सर्वपरमाणुरन्ध्र-प्रवेशकुशलान्महासिद्धान् ॥ ९४ ॥

सप्तर्षिमण्डलाद्यं मन्वंसोऽपि समानस्रष्टुम् ।

चार्वाधिविशेषलेहादुष्णं शान्तसुधायोगात् ॥ ९५ ॥

सिद्धपूरं शर्मदविध्यवशा बालान्विमूर्छयितुम् ।

कुशलान्पाश्चात्यविदः प्रेतापिशाचादिदर्शने कतिनः ॥ ९६ ॥

विकटाः पोटाः काश्चित्स्त्रुण्याद्ययताक्षकुशला वा ।

स्थविरभ्रूकुंसविटानाम पुनरात्मरूपेण ॥ ९७ ॥

भगवतिनृमवनां शक्तान्स्यर्पादिषय कोणेषु दुग्धेषु ।

कर्हिचि विद्याक्लेशे सिद्धिवर्भूतेषु कविं च कविराजु ॥ ९८ ॥

तस्मादर्थिन्ति महतीं शिल्पं शास्त्रं च नास्तिक्यम् ।

उच्चैः प्रचोदयन्तः शिशुनाशायैव लब्धजन्मानः ॥ ९९ ॥

( अ. १३ ) अर्वाचीने यद्दुद्रुमशास्त्रे मातृकाभिरिह ।

देशानां व्यवहारस्तथा चिरन्तेपि तन्त्रादौ ॥ १०० ॥

सूत्रे-सांकेतिकानां रसादिबीजस्यमुक्तमवीचीनस्य रस-शास्त्रं ४-१-३८। तद्विस्मृतिः कीलनं स्मरणे चानुपयोगः प्रकाश-कानां विज्ञतरत्वे ४-१-३९ ॥

इति चतुर्थाध्यायस्य प्रथमाह्निकम् ॥

---

कैरवैः पुनः किं गरलाद्युक्तं न तस्मात्स्त्यधुना ।
तस्मात्कालनदर्धाम्मन्त्रान्प्रवदन्ति मान्त्रिका मुग्धाः ॥ १०१ ॥
अथ योगचूर्णमुखं यत्कल्पितमभयवसाद्यैः ।
सामग्र्यापि फलं किं तेनाधिगु हन्त विज्ञेषु ॥ १०२ ॥
मूर्खा हि राजपुरुषा यदा कदाचिद्भवन्ति स्म ।
धूर्ता मन्त्रजमूर्च्छाविषकृतमपि मारयन्ति तदा ॥ १०३ ॥
अद्य तु चाणक्यादपि विज्ञतरेषु प्रशास्तृषु ।
कुर्वन्ति चमाद्ययोगं पापः कितवा नियच्छेत ॥ १०४ ॥
इति कीलितास्तु मन्त्रान्प्रदर्शितं तथापि मूर्खेषु ।
यान्त्येषु मन्त्रशक्तिं प्रपश्यति गौल्मिकजनासातः ॥ १०५ ॥
दृष्टास्तु केचिदधुनापि महासभासु
धर्मोपदेशगतरागभयाः सदर्पम् ।
उद्घोषयन्ति महतीं ध्वनिभावनादेः
विध्वस्टकादिजननीं महनीयशक्तिम् ॥ १०६ ॥
दूरेण तान्परिहरन्कित कालकूट-वृक्षानिव प्रचरतः शिशुभावनाय ।
मोहं निरस्य सुमतिः सततामलः स्याद्धवाधिचयनसंपदि विश्वशाली ॥१०७॥

इति चतुर्थाध्यायस्य प्रथमाह्निकम् ।

# चतुर्थाध्याये द्वितीयाह्निकम् ।

चतुर्थाध्याये द्वितीयाह्निके प्रथमाधिकरणमारचयति–

कायेन समवेतौ वा सूक्ष्मजीवौ युतौ तु वा ।
परलोकादिगमनाच्युतौ स्यातामिमौ स्फुटम् ॥ १ ॥
उत्क्रमादेरसिद्धत्वात्तयोः पृथगदर्शनात् ।
कायेन समवेतौ तु सूक्ष्मजीवाविति स्थितम् ॥ २ ॥

सूत्राणि–शरीरभेदाज्जीवभेदः ४–२–१ । शरीरात्मनोरयुतसिद्धिस्ते सिद्धयोर्योगः ४–२–२ । अयुतसिद्धिरभेदो बादरायणादीनाम् ४–२–३ । तथा सूक्ष्मस्य ४–२–४ । नोत्क्रमणं विज्ञानात्मनः सूक्ष्मस्य वा तथा च याज्ञवल्क्यः ४–२–५ ॥

द्वितीयाधिकरणमारचयति–

परिणामितया भूम्न उच्छित्तिः संभवेन्न वा ।
उच्छित्तिः संभवेदेव परिणामात्प्रकल्पिता ॥ १ ॥

---

(भा. १) शरीरभेदादिह जीवभेदो भेदस्य किं स्यादपरं प्रयोक्तृ ।
कायद्वये स्याद्यदि जीव एको ब्रह्मैव सर्वात्मकमेतदस्तु ॥ १ ॥
कायात्मनोर्नैव पृथक्प्रसिद्धिर्न सिद्धयोर्योग इहानयोस्तत् ।
विनिश्चितैवायुतसिद्धिरस्मात्तर्कप्रपञ्चैस्तु किमत्र युक्तैः ॥ २ ॥
यौ नामधेयेन पृथक्पदार्थौ प्रकल्पितौ तार्किकपुङ्गवैस्तैः ।
तयोः प्रसिद्धायुतसिद्धिरस्मात्तद्वैतवादास्त्वभेदमाहुः ॥ ३ ॥
पृथक्शरीरात्तु यथात्मतत्त्वं तथैव चित्तादिमयोऽपि सूक्ष्मः ।
पृथङ्न तस्मात्समवैत एव तस्मिन्निति स्पष्टमुशन्ति तज्ज्ञाः ॥ ४ ॥

सर्वेऽथ परिणामित्व स्सर्वोच्छेदाघदर्शनात् ।
उच्छित्तिः संभवेन्नैव कदापि सकलात्मनः ॥ २ ॥

सूत्राणि- अविनाश्यनुच्छित्तिधर्मा सर्वात्मा ४-२-६ । तस्मिन्परिणामादि ४-२-७ । नोच्छित्तिस्ततोनुमेया प्रतिबन्धाग्रहात् ४-२-८ ॥

तृतीयाधिकरणमारभ्यते-

शब्दावलम्बाद्भ्रदाय जनेषु च परिग्रहः ।
परलोकगमस्यास्तु न वा, सोऽस्तु सतां मतः ॥ १ ॥

स्तम्भे विनष्टे न हि तस्य दैर्घ्यमुत्क्रम्य कुत्रापि गतिः प्रतीति ।
तथैव मृतस्य न चात्मनोऽपि गतिर्गमः स्याद्विकृते शरीरे ॥ ५ ॥

तान्येव विज्ञानघनोनु नश्यत्यत्रासर्वानुत्क्रमित्यासमर्थेति ।
मत्रुत्तिगाढां गिरमुक्तवान् मत्रार्षिधुर्यो ननु याज्ञवल्क्यः ॥ ६ ॥

( अ. २ ) जीवस्य कायानुविनाशितास्मात्सर्वात्मनः शाश्वतता मता तु
सनातनः सर्वगतोयमात्मा धमस्ततप्रत्यगनभूयणात्कः ॥ ७ ॥

अस्मिंश्च सर्वात्मनि चित्समुद्रे तदिहतरङ्गाम्बरपूरपूर्णे ।
छायावधावर्त्तिनि भूरिसारा-फेनाञ्चिते पारिणाहवदाते ॥ ८ ॥

नसद्विदोघवहकेतुआतप्रवालजालोपचितान्तराले ।
शश्वद्विजन्तोः परिणामधारा वहन्ति संसारततीरपाराः ॥ ९ ॥

तत्त्वं तदेतत्परिणामि नित्यं दृष्टं हि नाप्यापरिणामि किंचित् ।
सर्वात्मनोच्छित्तिरसंभवैव कस्यापि सर्वात्मनि वा कथं स्यात् ॥ १० ॥

नश्यन्विशेषः परिणाममेति परे विशेषे सुधियां स्फुटं तत् ।
इयं तु नित्या परिणामधारा संसारवारांनिधिरेतदात्मा ॥ ११ ॥

अर्थवादे न शब्दस्य प्रामाण्यं धर्मवादिनाम् ।
स्वस्वधर्मस्य च श्रैष्ठ्याद्व्यर्थो लोकपरिग्रहः ॥ २ ॥

सूत्राणि–न शब्दविरोधः शब्दस्य विधिमात्रे प्रामाण्यात् ४–२–९ । अभेदो वेश्याविदुषोः शब्दावलम्बेन परलोकस्वीकर्तुः ४–२–१० । न शिखादित्यागो निष्कारणधर्मावलम्बिनाम् ४–२–११ ॥

---

( अ. ३ ) जीवस्य कायानुविनाशिता या शब्दोऽपि दृष्टः प्रतिपादयंस्ताम् ।
शब्दैर्विरोधेऽपि परैर्न हानिर्विधौ हि शब्दो भवति प्रमाणम् ॥ १२ ॥
शब्दोत्थमाणाद्यदवाभ्युपैषि जीवस्य नाकादिगमं महात्मन् ।
शब्दः प्रमाणं तव पूर्वजानां नैवापरेषामिति कोऽत्र हेतुः ॥ १३ ॥
धर्मान्तरीयास्तव धर्ममेव वदन्ति शश्वन्निरयस्य हेतुम् ।
धर्मान्तराणि प्रथयस्यजस्रं त्वं चातिदृप्तो विनिपातहेतून् ॥ १४ ॥
भवन्मते पापविलासिनीनां वासाय घोरो निरयः परत्र ।
धर्मान्तरीया अथ ता भवन्तं दिदृक्षमाणा निरयेतितुष्टाः ॥ १५
स्वर्गाधिकारी स्वमतेन सर्वैः परैः प्रपन्नो नरकाधिकारी ।
कस्यार्थवादेषु सतीदृशेषु वचः प्रमाणं भविता जनस्य ॥ १६ ।
स्वर्गाद्यभावेऽपि शिखादिकस्य त्यागो न निष्कारणधर्मभाजाम् ।
तद्दिग्भवेशाय सुरक्षिये या तव्यस्य निर्वैरमुपैतु मोक्षः ॥ १७ ॥
( अ. ४ ) सर्वात्मके ब्रह्मणि कायपुष्टिर्विपत्स्यमेषे किल नालिकेव ।
सूर्योपचारस्थनलालिकवच्च कायानुगा राजति जीवशक्तिः ॥ १८
विपत्समं स्यात्तु च सर्वगं च देहात्कथं ब्रह्म परैतु देहम् ।
शरीरमेतत्खलु नालिकेव शीर्येत्यथवा गमनं न तस्य ॥ १९ ॥

चतुर्थाधिकरणमारचयति-

भूम्नः कायस्य जीवस्य कस्याप्यस्त्युत्क्रमो नवा ।
अस्तु कस्यापि वक्तादित्यागौपम्यस्य दर्शनात् ॥ १ ॥
भूम्नः सर्वात्मकत्वं यच्छरीरं तु विशीर्यति ।
शरीरानुविनाशी च जीवः कस्योत्क्रमोऽस्त्वतः ॥ २ ॥

सूत्राणि-ब्रह्म शरीरं जीव इत्याकाशो नालिका सूत्रीप्रचार-नादादीतिवत् ४-२-१२ । न ब्रह्म शरीरान्तरमायात्याकाशवद्विभु नित्यं स्थाणु ४-२-१३ । शरीरं शीर्यति तस्य हि तन्निकृतम् ४-१-१४ जीवः पुञ्जोद्भवत्वाभ्रमति पुञ्जे ॥ ४-२-१५ ॥

---

पुञ्जोद्भवत्वाद्भविता क्व जीवः पुञ्जे विशीर्णे निधनस्य काले ।
नायं व्रजन्त्यां क्वचि नालिकायां तस्याः स्थलं चुम्बति नालिकान्या ॥२०॥
उड्डीय वा प्रेतपिशाचरूपः स्थेनो न कुञ्जे गिरिगह्वरे च ।
कुत्रास्यसौ नालिकया वियुक्तो रामो विदेहाधिपकन्ययेव । २१ ॥
( छ० ५ ) सर्वात्मनो बिम्बममानता चेज्जीवश्च तस्य प्रतिबिम्ब एव: ।
शरीरमादर्शनिभं तथेदं ततोऽपि जन्मान्तरवान्न जीवः ॥ २२ ॥
बिम्बप्रकाशोऽयमपास्य धात्रयादर्शमन्यं प्रतिबिम्बविग्रहः ।
नैवोपलब्धो न तथैव जीवो मताच्छरीरादपरं प्रयाति ॥ २३ ॥
स ध्वान्तिशोऽत्यैस्यपिशाचग्रहा परिस्फुटं पञ्चरपेस्विग्रहा ।
जीवोऽभविष्यद्यदि हन्त तस्य तदेत्र जन्मान्तरमप्यसेत्स्यत् ॥ २४ ॥
येषां वरो आत्मशरीरकोशाद्धात्मानमुद्धृत्य परत्र यावत् ।
न दर्शयेत्यंतकथाप्रवादैः पृथक्क आत्मानमवैतु तावत् ॥ २५ ॥

पञ्चमाधिकरणमारचयति-

जीवस्य प्रतिबिम्बत्वे भवेत्तस्योत्क्रमो न वा ।
भवेदेवोत्क्रमस्तस्य भिक्षवोऽपि तथा विदुः ॥ १ ॥
आदर्शनाशे नाशो हि प्रतिबिम्बस्य दृश्यते ।
तस्मान्न प्रतिबिम्बत्वेऽप्युत्क्रमः किल सिध्यति ॥ २ ॥

सूत्रे-मुकुरप्रतिबिम्बवद्वा ४-२-१६ । शरीरान्तरगो हि पिशाचवत्पञ्जरपक्षिवद्वा ४-२-१७ ॥

षष्ठाधिकरणमारचयति-

स्तन्यचूषणशक्त्यादि पैतृकं वाऽन्यजन्मजम्
जन्मान्तराभ्यासजं तत्स्फुटमुक्तं मनीषिभिः ॥ १ ॥
पैतृकं तु मनुष्याद्याकृतिवत्तत्समञ्जसम् ।
अलं तदर्थं जीवस्य जन्मान्तरविकल्पनैः ॥ २ ॥

सूत्रम् —न पूर्वजन्मसंस्कारः पूर्वजशक्तिस्त्वयस्कान्तवत् ४-२-१८ ॥

---

ब्रह्मैकरूप्ये न विवर्तभावे न चापि बिम्बप्रतिबिम्बभावे ।
जीवः शरीरं विकृतं विहाय गन्तुं शरीरान्तरमत्र शक्तः ॥ २६ ॥
(अ० ६) स्तनन्धये स्तन्यविचूषणादि दर्शनं जन्मान्तरसंस्क्रिया मा ।
मनुष्यरूपादिवदागतोऽसौ दायस्तु तस्मिन्निजपूर्वजेभ्यः ॥ २७ ॥
पित्र्यान्प्रजोऽपैति गुणानवस्था श्रुतेर्विरोधैः सह नात्र शङ्का ।
प्रवर्तिता जीव इह प्रदीपाद्गुणान्धतोयस्य वधाति नूनम् ॥ २८ ॥

सूत्राणि–साक्षाद्भोगस्त्वेकेनैव जन्मना ४–२–१९ । पारम्परिकः संसर्गात् ४–२–२० । आमुष्मिकभोगकल्पने मुक्त्यभावः ४–२–२१ । सुहृदादौ संक्रम इति चेन्निषधते सर्वेषामविशेषः ४–२–२२ ॥

अष्टमाधिकरणमारचयति–

स्वर्गादिकल्पना धर्मं जनान्प्रसंयते न वा ।
नरकस्य भयात्स्वर्ग-लोभाद्धर्मं जनो भजेत् ॥ १ ॥

ज्ञातुस्तु संक्रामति कर्म सख्यौ रिपौ सुते वा यदि मृत्युकाले ।
सर्वस्य संक्रामति कर्म जन्तोः कथं न तद्बुधनाविशेषात् ॥ ३७ ॥
स्वर्गादि मिथ्या नरकादि मिथ्या प्रपञ्च ओ : मतनाद्भुतोयः ।
मिथ्या पुनर्जन्मविकल्पनेन जनान्कथं वञ्चयतीह भिक्षुः ॥ ३८ ॥
कृष्यमानस्य गुणादियोगो नाप्यापि नीति स्फुटमाह भिक्षुः ।
किमेव तत्कानरमां कथाः कदापि जीवस्य गतिं प्रशस्ति ॥ ३९ ॥
पञ्चस्य रम्भापरिरम्भलोभः कम्पस्तथा वैतरणीकथाभिः ।
लोभेन रम्भाधिगमो न तस्य कम्पेन वा वैतरणीप्रपातः ॥ ४० ॥
मन्त्रोस्तु घोरफणोऽपि गृह्णाति तुल्यबलं सूनुजनोऽपि जानन् ।
पन्थाः प्रकम्पेन मुखं वहेद्वा न भिद्यते तु सगुलुखलो वा ॥ ४१ ॥
शास्त्रेषु वाक्यं परमार्थतत्त्वं भ्रमेण किं कौतुकिनि प्रयत्नम
कस्यास्ति शक्तिः परमार्थ एको भ्रमास्तु नैके नियता न चैते ॥ ४२ ॥
नरे नरत्वं नरणास्मवाच्यं भ्रमेण तस्मिन्नपरमाथवा वा ।
के के भ्रमाः कुत्र नरे भवन्ति कस्तत्परिपन्तुं प्रयतेत विद्वान् ॥ ४३ ॥

स्वर्गादिवादिनामत्र मठमन्दिरभूमिषु ।
महापातकभूयस्त्वात्कल्पना साधकोत्तमी ॥ २ ॥

सूत्राणि–कल्पना नाकनिरयादीनां सद्व्यतिकरात्काञ्चन गिर्यादिवत् ४-२-२३ । धर्मे भयार्थमज्ञानामिति केचित् ४-२-२४ तत्परस्वास्तेयमिव रज्जुसर्पसंनिकर्षात् ४–२–२५ ॥

नवमाधिकरणमारचयति-

भोगाशामोदकैस्तृप्त्या मूर्खाणां तु सुखं न वा ।
देवाङ्गनादिचिन्ताभिर्मोदस्तेषां विनिश्चितः ॥ १ ॥

---

वन्ध्यासुतं पुनरसतीसुत च विविच्य वेत्ता प्रथमे [illegible] ।
कार्यं द्वितीयेन निजं करोति पशुः प्रमत्तोऽपरथा जनोऽसौ ॥ ४४ ॥
अनेकजीवत्वविरोधिनीं चेद्बुद्धिं मतां ख्यापयतीह भिक्षुः ।
कथं मतीया अनुयायिनोऽपि जीवं पुनर्जन्मयुतं वदन्ति ॥ ४५ ॥
अयं दरिद्रो भ्रमतोऽयमाढ्यः फलाद्विभेदे वचसो ह्यतेते ।
जीवो न जन्मान्तरवान्भवेत्तत् तर्हीति तुल्यं वचने तथैव ॥ ४६ ॥
( अ. ८ ) तस्मादिदं काञ्चनपर्वताभा प्रकल्पना स्वर्निरयादिकानाम् ।
ऊर्ध्वं सुमेरावतलस्पर्शीले पुरे पयोधेर्वसुधोदरे वा ॥ ४७ ॥
धर्मे भयार्थे किल बालिशानां कल्प्येति तां केचन वीरयन्ति ।
व्यापारसाध्यं सुफलं मनोज्ञमेव स्मरन्तः प्रतिरोधयन्ते ॥ ४८ ॥
कियच्चिरं रज्जुभुजङ्गमाद्वा बिभ्यत्तदभ्यर्णगतं न बालः ।
मुद्रादिकं स्पृश्यति सोऽस्पृशन्वा चोरो न किं स्यात्तदयस्य चौर्यैः ॥ ४९ ॥
किं चात्र दृष्टः सदभक्तिकल्पा स्वर्गादिविख्यामपरामपायी ।
पापं न तद्वद्विहितेन यस्य न केवलाख्यां सकदेव नश्येत् ॥ ५० ॥

अभाव उत्क्रमस्यैव न दृष्टिः स्वर्गगामिनी ।

तस्मादत्युक्तिरेवैषाभिमता कविकल्पना ॥ २ ॥

सूत्रे-उपलभ्यमानसुखदुःखातिशयोक्तिस्तु ४-२-३० । नरकाङ्कुरा दृष्टव्यतिकरस्कन्धा सैषोत्प्रेक्षापल्लविता कविता ४-२-३१ ॥

प्रकाशश्चाधिकरणमारभ्यते –

कर्मणः स्यात्परित्यागः शक्त्या सातत्यमेव वा ।

विरागिणां परित्यागः संभवेदत्र का क्षतिः ॥ १ ॥

ज्ञानामृतक्षालितचेतसां तु पर्याप्तमायुर्महतामिहत्यम् ।

नेच्छन्ति नाकाम्बरचारिणं ते यस्यान्ति नो वा निरयात्पिशाचात् ॥५७॥

यत्कार्यशेषं भुवि किंचिदेषां सुतेन शिष्येण परेण वास्य ।

संपद्यते निर्वहणं न तेषु स्वर्गापवर्गौ निरयप्रतीतौ ॥ ५८ ॥

(ख० १०) सर्वस्य वैश्याद्युपलब्धिजस्य प्रतिक्षणात्मव तदुद्भवस्य ।

अत्युक्तिरेषा परिकल्पना वा सुराङ्गनालिङ्गनलोभजाता ॥ ५९ ॥

विध्यर्थवादाद्यविवेकजाता शास्त्रावलम्बात्प्रसृता सिता ।

नाराचपाठो नरकस्य पातकुरा दृष्टसुखादिकस्य ॥ ६० ॥

अत्युक्तिभिः स्कन्धवती कवीनामुत्प्रेक्षया पल्लविता विशाला ।

अपवर्गपदैर्जनचित्तभूमौ चिराय सा हन्त विकल्पलता ॥ ६१ ॥

अनाद्यविद्याप्रसवत्सकाशा विवेक-शस्त्रेण तां तीव्रहठेन कृन्ताम् ।

स्वानन्दरोचिष्णुभुजिष्णुभासु भस्मीभवन्तीमवलोक्य तुष्टः ॥ ६२ ॥

सर्वेऽपि यैवषा परिक्षीयमाणा विज्ञानभास्वति विश्वलोकः ।

विकासभाजा क्रमशो भविष्णुः संपन्नविद्या महितेन येन ॥ ६३ ॥

नासोन्मादस्मयोन्मानां विरागो मौर्ख्यमूलकः ।
तस्मात्तु कर्मसातत्यं यथाशक्ति हितं मतम् ॥ २ ॥

सूत्राणि-६६ कर्मसातत्यम् ४-२-३२ । तद्भक्तिज्ञानमूलकं त्रिवर्गफलम् ४-२-३३ । सा जीवन्मुक्तिर्ममत्वविरहे ४-२-३४ । संन्यासस्तूर्ध्वबाहुवत् ४-२-३५ ॥

(अ॰ ९१) अहंमतिध्वस्तार्तिहितस्थितिस्थं विज्ञानशुद्ध्या जगतः शिवाय ।
एतेन भक्त्या च विशुद्धचित्तः सत्कर्म कुर्वीत सदैव साधुः ॥ ६४ ॥
यद्वस्तु यादृक् तदलं तथैव जानन्मनाको न स्वार्थभक्तः ।
अनारतं कर्मपरो लभेत धर्मार्थकामान्महनीयकीर्तिः ॥ ६५ ॥
अयं जनो नैव परस्तु कश्चिदयः स्वार्थमिह प्रतिपद्य कर्मी ।
भूमानमानन्दमयं भजेत निवेश्य सोऽल्पोऽपि स धन्यमेति ॥ ६६ ॥
अस्यापि लोकस्य शरीरनाम्नः परस्य लोकस्य च भूमनाम्नः ।
अंशांशिभावं तु विदन्महात्मा सर्वस्य मुक्तः कुशलं करोति ॥ ६७ ॥
न कर्म सर्वात्मनि याति विश्रमं निरस्तकर्मा परमाणुरत्र नो ।
स्वकर्मसंन्यासभृतः सुबुद्धयो न रोचयन्ते परमार्थवल्लभाः ॥ ६८ ॥
प्रमादवान्कर्म विहातुमीहते जनस्तु यो भूमनि सर्वकर्मणि ।
स ऊर्ध्वबाहोरिव बाहुरेककः पुरोऽर्ध्वशोषं मृतवद्विशुष्यति ॥ ६९ ॥
इदं हि धर्मार्थसुखस्य साधनं शरीरमाद्यं न ममत्वमत्र च ।
कथं तदेतत्स्वकृतात्मनो धनं विनाशयेत्स्वैरसकर्मणा सुधीः ॥ ७० ॥

विहारतादि वासुदेवस्य ४–२–३८। कलिदैवायनतिलोकान्तर-

दिव्यशक्तिपिशाचादिप्रत्यया निर्वेदाभासहेतवः ४ २–३६ ॥

इति चतुर्थाध्याये द्वितीयाह्निकम्।

---

कलिरयमिह का स्याद्गतिर्हन्त जन्तो-

रतिबलवति दैवे पौरुषं किं नु कुर्यात्।

अयनतिरवराणां निश्चिता पूर्वजेभ्यो

भुवि भवदपि दुःखं शर्मणामुत्र शश्वत् ॥ ७८ ॥

असनिवत पिशाचा दिव्यशक्त्या प्रबन्धा-

न्कथम मनुजशक्तिस्तान्दृशानद्य कुर्यात्।

रिशशुजनमिति वादैर्मोहयन्तः समन्ता-

द्गुपञ्च इहमधन्यं भारतं नाशयन्ति ॥ ७९ ॥

इति चतुर्थाध्याये द्वितीयाह्निकम्

# पञ्चमाध्यायस्य प्रथमाह्निकम्

पञ्चमाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति–

चितेः निषेधसंशीतिविषयत्वं भवेन्न वा ।
सर्वत्र संशये सर्वाभावे वा संभवेदिदम् ॥ १ ॥
संशयो वा निषेधो वानुपलब्धो न संभवेत् ।
उपलब्धिस्वरूपायां संभवो नैतयोश्चितौ ॥ २ ॥

सूत्राणि–ममत्वनाशाच्चिदात्मभावात्मको ज्ञानम् । ५–१–१ । चिदात्मिका न निषेध्या न च संदिग्धा । ५–१–२ । निषेध-संदेहयोरपि चिदात्मकत्वात् ५–१–३ ॥

---

(अ· १) ममता तिरोभवति हन्त यदा सकलात्मता च समुदेति चिदा ।
चितिशक्तिरप्रतिहताथ तदा प्रथते प्रमादविगमादमला ॥ १ ॥
अखिलात्मिका चितिरियं सततं परिणामिनो च निजसाक्षितया ।
समवस्थिता च तदिमामबुधाः क्षणिकामथापरिणतिं च विदुः ॥२॥
परिणाममेव सुमता जगतुर्मिलसाक्षिता यतिजनाभिमता ।
हृदमभ्रहस्तिनिभमंशपरि-पश्यां विमोहयति हन्त जनान् ॥ ३ ॥
चिदियं निषेधविषयो न भवेन्न च संशयस्य विषयः किल सा ।
उभयं चिदात्मकमिदं हि यतश्चितोऽक्षरात्मकतयाधिगता ॥४॥
यदि सर्वमस्ति चितिरस्ति सदानुपलब्धिरस्तिविषयो हि कथम् ।
अथ नास्ति सर्वमुपलब्धिरियं न चितिर्निषेधविषयस्तु ततः ॥ ५ ॥

द्वितीयाधिकरणमारचयति-

चिदात्मनः परिच्छेदः कथमप्यस्ति वा नवा ।
ज्ञानं नैवापरिच्छिन्नं परिच्छेदः स्फुटस्ततः ॥ १ ॥
उपलब्धिमयादन्यत्किं वा स्यादखिलात्मनः ।
तस्मिन्नंशाः परिच्छिन्ना नास्य तु स्यात्परिच्छिदा ॥ २ ॥

सूत्रे-न परिच्छिन्ना सर्वात्मनः परिच्छेत्तुरभावात् ५-१-४ ।
तस्यामेकस्यान्येन परिच्छेदो न तस्या अन्येनासंभवात् ५-१-५ ।

---

यदि संशयस्य विषयोऽप्यखिलोऽनुपलभ्य संशयमवैषि कथम् ।
न चिदात्मनस्तदुपलब्धिमयात्पलायितुं प्रभवतीह जनः ॥ ६ ॥
विविधोपलब्धिविषयेऽपि चिदात्मनि नैककोंऽश इतरं स्पृशति ।
असति समेऽभिघटने कुलयश्चरणां शरीरिणां इवैकतनोः ॥ ७ ॥
अत एव भारतमुपावसतोऽनुपलभ्यमेव ननु सिद्धपुरम् ।
न वहित्रबाष्पशकटादिगमाद्भवतीह यावदनयोर्घटनम् ॥ ८ ॥
न च मानसेष्वपि सदा सकलं सुलभं स्मृतिः प्रभवतीह किल ।
स्मृतिसंस्क्रियादिवशतोंऽशस्य स्फुटमन्य एकमवकर्षति यत् ॥ ९ ॥
प्र० २) अखिलात्मनोऽप्यदुपलब्धिमयात्परमस्ति न प्रमितिशून्यतया ।
न परिच्छिदा भवति तेन चितेर्न परिच्छिनत्ति हि निजं किमपि ॥ १० ॥
इह चिन्मयेंऽशमपरं तु परः परिविच्छिनत्ति सकलात्मनि यत् ।
स ततो निजप्रमितिकः सकलं परिपश्यति स्वयमनन्यगतम् ॥ ११ ॥
प्र० ३) समुदेति बुद्बुदतरङ्गनिभं सकलं स्वभावविधि चिदम्बुनिधौ ।
प्रविलीयते पुनरिहैव यतः सकलात्मता स्फुटममुष्य ततः ॥ १२ ॥

तृतीयाधिकरणमारचयति–

तातु वैचित्र्यमात्रस्य ब्रह्मण्युपरमो यथा ।
निर्वैचित्र्यं ब्रह्म शुद्धं मुक्तौ प्राग्वापि सुस्थितः ॥ १ ॥
लुप्तेऽप्येकत्र वैचित्र्ये परेषामिह दर्शनात् ।
सृष्टेरनाद्यनन्तत्वाद्ब्रह्म वैचित्र्यवत्सदा ॥ २ ॥

सूत्राणि–स सर्वात्मा शरीरेन्द्रियविषयमनोदर्शी साक्षी ५–१–६ । तस्मिन्सर्वात्मसमुद्रे शरीराद्यमुदेति लीयते च बुद्बुदादिवत् ५–१–७ । तस्मिन्ननाद्यनन्तं पारमार्थिकं वैचित्र्यम् ५-१-८ । वैचित्र्यविशेषविलोपेऽप्यपरिच्छिन्नासंख्यवैचित्र्यान्तरवानयम् ५–१–९ । न हि बुद्बुदविशेषलोपाद्बुद्बुदो महार्णवः ५-१-१० विशेषाणां कृत्स्नानामुदयस्य विलोपस्य वा यौगपद्याभावाद्वैचित्र्यात्यन्ताभावो नाममात्रम् ५–१–११ ॥

---

परिणामजातमिह यद्विविधं परमार्थसत्तदखिलं न मृषा ।
विषमत्वमेतदनवध्यनुपक्रमणावसानमखिलात्मतनो ॥ १३ ॥
समुदेतु वा विलयमेत्वपि वा परिणाम एक इह सागितनो ।
परिणाममात्रविकरस्तु न सोऽविरतोर्मिकः किल चिदम्बुनिधिः ॥१४॥
उदितिर्विलुप्तिरपि वा युगपत्परिणाममात्रविषयास्तु कथम् ।
परिणामशून्यपरमात्मकथा लयमेतु तेन किल भिक्षुकुले ॥ १५ ॥
न सुषुप्तिमात्रमपि सुषुप्तिमयो भवति व्यत्यतिकरस्तु विभुः ।
प्रभवाप्ययव्यतिकरोऽपि तथा भवशून्यता भवतु हन्त कथम् ॥ १६ ॥
विर्षमत्वमप्यदुरतीकुरुतामपि वा न भिक्षुरिह चित्कलधौ ।
प्रभवाप्ययव्यतिकराख्यमसौ विषमत्वमुत्कटमुदञ्चयति ॥ १७ ॥

चतुर्थाधिकरणमारचयति-

वैचित्र्यं मायिकं सर्वं पारमार्थिकमेव वा ।
विलोपान्मायिकं सर्वं नहि किञ्चिदनश्वरम् ॥ १ ॥
पारमार्थिकमेवेदं व्याघातरहितं यतः ।
विलोपाद्वस्त्वसच्चैव न मर्त्यस्त्वात्सुतो ह्यसन् ॥ २ ॥

सूत्रे-न मायिकमनिर्वाच्यं वैचित्र्यं भिक्षोरिवाद्वैतशुद्धि-विलोपात् ५-१-१२ । विलोपादसदिति चेन्न व्याहतेस्तत्प्रयोजकत्वात् ५-१-१३ ॥

पञ्चमाधिकरणमारचयति-

मायानादिरनिर्वाच्या सतोऽर्व्यतिकरोऽथ वा ।
अस्त्वनादिरनिर्वाच्या भिक्षवोऽपि तथा विदुः ॥ १ ॥

(अ० ४) कथमस्तु मायिकमनिर्वचनोचितमङ्ग सर्वमुपलब्धमिदम् ।
न विचित्रभूयमखिलं जगतोऽपलपत्यपत्रप उद्धतधीः ॥ १८ ॥
यदसच्च तद्भवति जातु न सद्विभाति सत्त्वमिति कल्पवचः ।
प्रतिभाति संगतमुशन्ति ततः शशशृङ्गसंनिभमसत्सुधियः ॥ १९ ॥
उपलब्धसत्त्वमिदं आस्त्वपि यत्तदसत्कथं भवतु सत्त्वयुतम् ।
शशशृङ्गवन्ध्यतनुजादिपरं मतमत्र शब्दमयमीदृगसत् ॥ २० ॥
(अ० ५) अथ वन्ध्यभिक्षुवचनैकगतिः लभते न या किमपि निर्वचनम् ।
अयि मायया ननु विवद्वयता-ऽऽर्तिदाधयालमुररीकृतया ॥ २१ ॥
सति कुत्रचिद्व्याहतरस्य सतः प्रतिपत्तिरिष्टमिदमध्यसनम् ।
असतस्तु नैव सृति नापि सतोऽसति आतुचित्रम इह प्रथितः ॥ २२ ॥

सतोर्व्यतिकरस्त्वेषा यस्या नामान्तरं भ्रमः ।
नासतो विद्यते भावो नाभावो विद्यते सतः ॥ २ ॥
सूत्राणि–तस्माज्ज्ञानाद्विमोचया न चानिर्मोक्षया ५–१–१४ ॥
क्षणिकः प्रमादजः सतोर्व्यतिकरस्तु सा तथा च वक्ष्यति ५-१-१५।
नासतः सत्यध्यासो दृष्टः श्रुतो वा ५–१–१६ ॥
षष्ठाधिकरणमारचयति–
ज्ञानेपि कर्मसातत्यमुच्छेदः कर्मणोपि वा ।
ज्ञाने कर्म न संभाव्यं भवत्वेतद्द्वयन्तथा ॥ १ ॥
ज्ञानेपि कर्मसातत्यं न्यायपूर्वन्तु तद्भवेत् ।
नाकर्म वासुदेवस्य जीवन्मुक्तस्य योगिनः ॥ २ ॥

---

न कदापि सख्यहि जगद्गुरसि स्मृतिरप्यमुष्य कथमाविरभूत् ।
अनुभूतपूर्वविषयस्फुरणं विषये परत्र तव चाध्यसनम् ॥२३॥
यदहेव मायिकमिदं निखिलं यदि चेन्द्रजालसदृशं वदसि ।
अपरोक्षकोसि नटपेटगतं सकलेन्द्रजालमवगच्छ शिशो ॥२४॥
(अ० ६) ज्ञतया तथैव किल विज्ञतया सततान्वितः सतु चिदम्बुनिधिः ।
अविरुद्धमेतदिह शक्तियुगं तपनस्य तापपरिवर्षणवत् ॥२५॥
अयमप्रमेयनिजबोधनिधिर्ज्ञतया ममत्वरहितो नृपवत् ।
अथ विज्ञ इव ममतां वहते [illegible] च भजते पितृवत् ॥२६॥
तनये निजे ममतो जनको न परस्य पुत्रमुपलालयति ।
अथ स प्रशास्तृपदवीं तु भजन्स्वसुते परत्र च समो भवति ॥२७॥
ज्ञतया तथैव ममतां दधतः जगत्प्रपञ्चमखिले परतः ।
तनुरक्षणं भवति विज्ञतया [illegible] ॥२८॥

सूत्राणि–ज्ञानविज्ञानशक्तिमांश्चिदात्मा ५-१-१७ । उभयी शाश्वती ५-१-१८ । विज्ञानशक्त्युद्रिक्तायां परिच्छिन्नात्मता पित्रादेरिव ५-१-१९ । ज्ञानशक्त्युद्रिक्तायामपरिच्छिन्नस्वरूपपरिचयो ममतोच्छेदश्चाधिकरणिकस्येव ५-१-२० । स न्यायपर्यवसायी ५-१-२१ । नाकर्म वासुदेवस्य ५-१-२२ ॥

सप्तमाधिकरणमारचयति–

निर्गुणः प्रकृतेर्भिन्न ईशः प्रकृतिरेव वा ।
नियन्ता प्रकृतेः कश्चिन्निर्गुणः संभवत्यसौ ॥ १ ॥

नृपतेः समस्तभवचक्रराधिपतिर्यथा न सहतेऽनुचितम् ।
कृतरेतराक्रममनुष्य जने समतां वहंश्च परिपात्यखिलान् ॥२९॥
सकलात्मनः सकलमेव विदन्स्वतनुं परांश्च परिपाति तथा ।
स्वतया प्रबुध्य तु मतिर्जगतः शिवमाचरन्सततमुद्यमवान् ॥३०॥
कृपणोऽलसस्तनुमिमां मम किं परिपोषयामि न पराश्रयैः ।
अथ वा क्षिपामि न नरकमुखे कपयेति विस्मयति हन्त कुधीः ॥३१॥
स ममत्वदाढर्यबृंहणस्तु जडोऽन्यजनस्य परित्यजत तं विबुधाः ।
अमृतासुरस्य तनयैर्विकलं जगदीदृशैर्निरयपातहतैः ॥३२॥
वसुदेवसूनुरपि कर्मपरित्यजनं विनिन्दति स योगिवरः ।
जनकादयोऽपि किल कर्मपरा दधति स्म सिद्धिमतुलामवनौ ॥३३॥
७) सुखमत्र भूमनि चिदम्बुनिधौ न परिच्छिदावति सुखं परमम् ।
अनघेन जीवत इहासुलघे गगनाद्भुताप्रथयितो न सुखम् ॥३४॥

प्रकृतिर्नियतैवेयं विनियम्या न केनचित् ।
सर्वाकारेश्वराभिन्नासाचित्येव विनिश्चयः ॥ २ ॥

सूत्राणि-स भूमा सुखं नाल्पे सुखमिति सनत्कुमारः ५-१-२३ । स परात्मा सर्वगुणः सर्वाकारः सर्वकामस्तथा च श्राह्मणम् ५-१-२४ । न निर्गुणो निराकारो वा तस्यात्यन्ताभावरूपत्वात् ५-१-२५ । प्रकृतिः प्रमेयात्मिका सर्वत्र विशेषेषु ५-१-२६ । सामान्यतस्त्वप्रमेया चिदात्मिका ५-१-२७ ॥

षष्ठमाधिकरणमारचयति-

भ्रमस्य तत्त्वज्ञानाद्वा लोपाद्वा मुक्तिरिष्यते ।
लोपान्मुक्तिर्न मुक्तौ स्यादनुबन्धो भ्रमस्य हि ॥-१ ॥

---

अखिलात्मकोऽखिलगुणो भगवानखिलाकृतिर्निखिलकामनिधिः ।
स सदात्मकः किल चिदम्बुनिधिः सुखमप्रमेयमिह सर्वमये ॥३५॥
न स निर्गुणो न च निराकृतिरित्यवधारयेः किमपि नास्ति तथा ।
यतिवक्रगभूर्निवासरसा छविका छिवेति सरणिस्तु गिराम् ॥३६॥
सपरिच्छिदा प्रकृतिरंशधिया निखिला तु मं प्रमितिमर्हति सा ।
अपरिच्छिदा चितिमयी प्रकृतिर्बठरात्मनस्य निखिलात्मसमा॥३७॥
पुरुषस्य या प्रकृतितस्तु भिदा कपिलप्रमाठलहरी ननु सा ।
विविनक्ति हन्त पुरुषं प्रकृतेस्ततेर्मुनिर्विदुमरत्वमिव ॥३८॥
पुरुषा हि बुद्बुदतरङ्गनिभाः प्रकृतौ चिदात्मनि विशेषमयाः ।
सकलात्मनः प्रकृतितः पुरुषान्कपिलो विवेक्ष्यति कथं मतिमान् ॥३९॥
( अ० ८ ) व्यतिभेद एव विषयस्य सतो विषयान्तरेण च सता विदुषः ।
भ्रम उच्यते मरुमरीचिजल-स्फुटमल्लिकाद्यगहिभोगनिभः ॥ ४० ॥

मुक्तिस्तत्त्वावबोधः स्याद्भ्रमलोपोऽप्रयोजकः ।
सदिग्भ्रमोऽपि विज्ञातभ्रमः पान्थं न भ्रश्यति ॥ २ ॥

सूत्राणि–तत्त्वेनाज्ञातोऽव्याहतः सतोऽर्व्यतिकरो भ्रमः ५-१-२८। सत्यसतस्तद्विपर्ययेण वाध्यासं मिथ्याः ५-१-२९ । भ्रमो ज्ञान-धर्मस्तत्त्वेन धर्मान्तरवज्ज्ञेयः ५-१-३० । तज्ज्ञानमप्रमादादज्ञानं च प्रमादात् ५-१-३१ । तस्य तत्त्वेन ज्ञानं मुक्तिः ५-१-३२ ॥ न नियतस्तद्विलोपो न चापेक्षितः ५-१-३३ । कुतो भ्रमः प्रमादेनेति न चोद्यं न हि दृष्टेनुपपन्नं नाम ५-१-३४ ॥

इति पञ्चमाध्याये प्रथमाह्निकम् ॥

स्फुरति नासतो न च सतोऽसति वा भ्रम उच्यते स्मरणमप्यसतः ।
नहि संभवत्यसति हेम्नि गिरावपि कस्य हेमगिरिसर्कभवः ॥ ४१ ॥
भ्रमोऽपि धर्मविदत एव तत्त्वतोऽवगम्य धर्मान्तरवत्समुत्तमाः ।
प्रमाददोषं विनिरस्य ये स्थिताः सदेहमुक्तिं दधते सदेह ते ॥ ४२ ॥
न तत्त्वमेतस्य विदन्ति ये पुनः पतोऽप्रमाणा मतमुक्तिमायतीम् ।
अवस्थितास्ते निरये तमोमये चिरं विषीदन्ति गता प्रवाहतः ॥ ४३ ॥
भ्रमस्य लोपो नियतो न चाप्यसावपेक्षितस्तत्त्वविदोऽपि मुक्तये ।
भ्रमो भ्रमत्वेन विनिश्चितः परं ददाति निःश्रेयसमत्र निश्चितम् ॥ ४४॥
जनोऽनुबध्नात्यपि दिग्भ्रमे यथा दिशोऽनुमित्यावधिबिम्बदर्शनात् ।
न कार्यहानिं भजते तथा गतिर्भ्रमस्य सर्वस्य मता मनीषिणाम् ॥ ४५ ॥
कुत उदित इह भ्रमश्चिदब्धौ ननु सकलात्मनि भूम्नि सच्चिद्रूपे ।
अनुचितमिति नानुयोज्यमेतत्स्फुटमुपलब्धिरबाधितोऽपपत्तिः ॥ ४६ ॥

इति पञ्चमाध्याये प्रथमाह्निकम् ।

# पञ्चमाध्याये द्वितीयाह्निकम् ।

पञ्चमाध्याये द्वितीयाह्निके पञ्चमाधिकरणमारचयति-

मतभेदेषु सर्वेषु श्रद्धा कार्या न वा पुनः ।
सर्वेषां मतभेदानामङ्गीकार्याऽत्र सत्यता ॥ १ ॥
वस्तुन्येकविधेऽनेक-मतानां स्यान्न सत्यता ।
मायानिःश्रेण्यतीतोऽस्माद्ग्राह्यः सिद्धान्त एककः ॥ २ ॥

सूत्राणि-सा माया निःश्रेणित्रयवती ममताहन्ताद्विपर्यया ५-२-१ । उपनिषत्सिद्धान्तस्तामतीतः ५-२-२ । मतभेदा निःश्रेणिषु ५-२-३ । प्रमातृप्रमेयपृथक्कारः प्रथमा ५-२-४

---

(अ० १) भ्रमं ममत्वादिविशेषरूपिणं वदन्ति मायेति चिरन्तसूरयः ।
विदुस्त्रिनिःश्रेणिमिमाममायिको स्थितं त्रिनिःश्रेण्युपनिषन्मतं तथा ॥ १ ॥
भ्रमस्य निःश्रेणिषु सन्ति वर्तयन्मतं मतानामितरेतरद्विषाम् ।
चिराय यद्वादिभिराकुलीकृते ममाद्य विज्ञानमथापि भारते ॥ २ ॥
अपौरुषेयं निजधर्मपुस्तकं अनागमुक्तोऽन्यतिभूरूपं विना ।
शरीरजीवादिषु पञ्चरात्रक-स्थितिं जगन्निर्मितिमादिशन्त्यना ॥ ३ ॥
अधीश्वरत्वं पुरुषस्य कस्यचिद्वदन्त्वतां तत्सन्धियपद मन्युताम् ।
जनेषु निर्णीय मतप्रथा अमी चरन्ति भूमौ मतवादवल्लभाः ॥ ४ ॥
प्रमादभ्रान्तो महितस्य यस्य च हठेन देवो पतितं सुदावहम् ।
सदैव देवोऽयमिति श्वेताङ्किताः समर्थयन्तः प्रवदन्ति शास्त्रिणः ॥ ५ ॥

द्वयस्यान्यतरस्य वा निष्पेषो द्वितीया ५-२-५ । निष्पिष्टस्य कल्पितानां तत्तत्पुञ्जीकारे पुञ्जविशेषे चिदन्तर्भावस्तृतीया ५-२-६ ॥

द्वितीयाधिकरणमारचयति-

पुरुषः प्रकृतिश्चेति द्वैतं सत्यं मृषाथवा ।
सत्यं स्यादुपलब्धं हि सर्वैर्द्वैतमितीदृशम् ॥ १ ॥
न तत्संभाव्यते सत्यं द्वैतं नायुतसिद्धयोः ।
न द्वैतमस्मान्नैकं वा मिथ्यैकं सद्द्विनाम तत् ॥ २ ॥

सूत्राणि-जातिव्यक्तिवत्प्रकृतिपुरुषभेदं कापिलाः ५-२-७ । न पुरुषो भूतान्येवेति चार्वाकाः ५-२-८ । ब्रह्म निर्गुणं सत्यं जगन्मिथ्येति भिक्षवः ५-२-९ । एते प्रथमायाम् ५-२-१० ॥

---

प्रमादपाप्मानमुदस्य विज्ञतां स्वबन्धुतायाः सततं दिदृक्षवः ।
सरस्वतीस्रोतसि निर्मले पुनर्वगाहमिच्छन्ति महाशयाः परे ॥ ६ ॥
स्वधर्मतातं विटदाम्भिकेषु वा भुकुंसभण्डेषु च भक्तिमातरम् ।
समर्प्य पोटासु च शास्त्रसोदरं कथं न मुग्धो निरये पतिष्यति ॥ ७ ॥
शनैः प्रमातुः सकलात्मनोऽपि या प्रमेयतः शब्दवशात्पृथक्क्रिया ।
भ्रमस्य मार्गेति मतस्य सादिमाद्यतारनिःश्रेणिरियं प्रकीर्तिता ॥ ८ ॥
पृथक्कृतात्प्रयुगादिति स्फुटं विशीर्यतः कर्कशतर्कचक्रके ।
द्वयस्य किंवान्यतरस्य संमता प्रमत्र निष्पेषणमेत्र चापरा ॥ ९ ॥
हठाद्विनिष्पिष्य च तार्किकैः कण-क्षणादिभिः पुञ्जविशेषतां पुनः ।
क्वचापि सीसोऽथमुपेत्य कुर्वविवेचनं भूम्न चहान्तिमा मता ॥ १० ॥
(भा. २) विमोहितः शब्दवशेन तार्किकोऽभ्युपैति जातिं पृथगर्थतो यथा ।
तथा प्रमातृत्वकृतं तु वस्तुतो विविक्तभावानवयन्ति कापिलाः ॥११॥

तृतीयाधिकरणमारचयति-

अणुविज्ञानमुख्याः स्युः स्वतन्त्राः कणराशयः ।
अनुवद्धार्थवैका स्यात्प्रकृतिः कणशालिनी ॥ १ ॥
परम्पराः कणानां स्युः स्वतन्त्रास्तत्र का क्षतिः ।
स्फुटोपलब्धः संबन्धस्तस्मात्प्रकृतिरेकिका ॥ २ ॥

सूत्राणि-अनेके जीवास्तत्तत्परिमाणा आर्हतानाम् ५-२-११। क्षणिकानि विज्ञानानि सौगतानाम् ५-२-१२ । अनेकेण-वोऽनेके चात्मानः काणादानाम् ५-२-१३ । एते द्वितीया-याम् ५-२-१४ ॥

चतुर्थाधिकरणमारचयति-

सर्वात्मनोऽवतारादि-परिच्छेदो भवेन्न वा ।
अमुष्य सर्वशक्तित्वात्स्यात्कथं न परिच्छिदा ॥ १ ॥

---

प्रमाण लेशं कपिलानुसारिभिः प्रदर्शितं द्वैतमलं तथात्यजम् ।
न पुंसि चात्मांशमतत्त्विका रता तथापि भूतेषु च भक्तिमुत्तमाम् ॥१२॥
पुमांसमेकं प्रवदन्ति भिक्षवो जगन्मृषेत्यभ्युपयन्ति च स्फुटम् ।
इति त्रयस्ते प्रथमामुपासते भ्रमस्य निःश्रेणिमथादिमभ्रमाः ॥ १३ ॥
( अ. ३ ) विदन्ति तत्तत्परिमाणमार्हता समाख्यया जीवमनेकमूर्जितम् ।
समाश्रयन्ति क्षणिकांश्च सौगता मताधयो विंसलयान्प्रवाहिणः॥१४॥
अणूनमेकानथ चात्मनो बहूनुपासते काणभुजा चकासिन ।
त्रयो द्वितीयामिति वादिनः स्थिता भ्रमस्य निःश्रेणिमनन्तविभ्रमाः॥१५॥
( अ. ४ ) वदन्त्यधर्मोल्केषु वदन्त ईश्वरं वदन्ति मोदं किल देवताभ्रमाः ।
तमेव मत्स्यादिविशेषरूपिणं विदुस्तु भक्ता अवतारवादिनः ॥ १६ ॥

सकलस्य शरीरस्य नाशारूपेण संस्थितिः ।
असंभाव्या यथा तद्वत्परिच्छेदोऽखिलात्मनः ॥ २ ॥

सूत्राणि-ऊर्ध्वैष्ववधं अरतीयानि दैवाः ५-२-१५ । जीवशरीरेष्वित्यन्ये ५-२-१६ । पिशाचवद्वित्तस्तत इत्यपरे ५-२-१७। एते तृतीयायां सा भ्रमस्य परा काष्ठा ५-२-१८ ॥

पञ्चमाधिकरणमारचयति-

नाशक्रमाद्विशेषाणां सर्वोच्छेदो भवेन्न वा ।
क्रमशः सर्वनाशे स्यादुच्छेदः का विकल्पना ॥ १ ॥
नाशे विशेषस्यैकस्य परेषां समवस्थितिः ।
उद्भवश्चेत्यसंभाव्या सर्वोच्छेदकथा ततः ॥ २ ॥

सूत्राणि-मणिमयपाञ्चालिकावत्तु सर्वात्मा बिम्बः ५-२-१९ । मनांसि मणयस्तत्र ५-२-२० । मणिविशेषेषु तत्प्रतिबिम्बा मणि-

पिशाचवत्संविचरोन्नतस्तो मुमुक्षवयोयमिति स्मयेतरे ।
वित्तात्तृतीयामिति वाविमस्यपो भ्रमस्य निःश्रेणिमिहोल्लसभ्रमाः ॥१७॥
भ्रमस्य काष्ठा परमा प्रकीर्तिता चकवतानां परमाधिदेवता ।
विकर्मणां या परमा शुनामियं हन्तेतु वेशोऽपरमा पमाहिषु ॥ १८ ॥
(अ ५) स एव भूमा मणिसालभञ्जिका-निभस्तु बिम्बः सकलात्मकः शिवः ।
मनांसि विव्यङ्मणयोऽत्र चिन्मये विशिष्य बिम्बायतनाय चेष्टते ॥१९॥
मनोविशेषे प्रतिबिम्बितोंऽशतः स एव भूमा ननु जीवसंज्ञकः ।
यथैव याहृवपुर्बिम्बितो मणौ। तथैव बिम्बः प्रतिभाति निश्चितम्॥२०॥

भेदभिन्ना जीवविशेषाः ५-२-२१ । मणेराकारोपमर्देऽप्रतिबिम्बविशेषस्य नाशो न बिम्बस्य न वा कृत्स्नस्य मणिसमूहस्य प्रतिबिम्बसमूहस्य वा ॥ ५-२-२२ ॥

षष्ठाधिकरणमारचयति-

भूमांशवेद्योऽभ्याहृत्या, वेद्यः स्यादेव सर्वथा ।
भक्तानां हि प्रकाशोऽसाववेद्यो वातिसौक्ष्म्यतः ॥ १ ॥
अंशवेद्यः सदा भूमा परिच्छेद्यो न कस्यचित् ।
ज्ञानं यथा यथांशानामविद्यापगमस्तथा ॥ २ ॥

सूत्राणि-तदद्वैतं शुद्धं वैश्वानरीयम् ५-२-२३ । शरीरवदाकाशवत्समुद्रवच्चेदम् ५-२-२४ । न कार्त्स्न्येन विदितं नात्यन्तमविदितम् ५-२-२५ । अज्ञातं नराद्याकारत्वादिना निराकार-

---

मणेरिहैकस्य तु नाशने विभुः प्रयाति बिम्बो विलयं कथंचन ।
न चाप्यशेषप्रतिबिम्बविभ्रमो विलीयते तु प्रतिबिम्बसंचयः ॥ २० ॥

( अ· ६) तदित्थमायाशबलत्वदूषितं विशुद्धमद्वैतमुदारधीर्जगौ ।
अनुस्मरन्वैश्वनरारवैर्गिरः स वल्लभः सत्यवतीसुतानुगः ॥ २२ ॥
यथा कराङ्घ्र्यादि शरीरसंगतं तदित्थमाद्यम्बरसंभृतं यथा ।
तरङ्गफेनादि पयोब्धिमाश्रितं तथैव विश्वं सकलात्मनि स्थितम् ॥ २३ ॥
चिदात्मतत्त्वं विदितं न सर्वथा जनस्य किंचाविदितं न सर्वथा ।
यथा यथास्यांशमवैति मानवस्तथा तथा विज्वरतामृच्छति ॥ २४ ॥
रसप्रभासौरभसिद्धसाम्यमाश्रयोऽखिलात्मनोंऽशा बहवः श्रुतिश्रुताः ।
इहैकमेकं परिहृत्य कर्मभिः समग्रतामुः सकलोऽकरोत्स्वयम् ॥ २५ ॥

वादिनां च ५-२-२६ । विदितं वामदेवजनकयाज्ञवल्क्यवासुदेवादीनां जीवन्मुक्तानाम् ५-२-२७ ॥

अप्रमाधिकरणमारचयति-

आत्मानात्मविदोरेका गतिर्वा द्विविधा मता ।
कृमिभस्मविडन्तत्वादेका स्यादुभयोर्गतिः ॥ १ ॥

---

निजात्ललाटादथवोर्ध्वलोकतस्त्रिशारमोङ्कारमुदीर्य विस्फुरत् ।
तडित्समं ज्योतिरवेक्षसे सखे शरस्य लक्ष्यं प्रणवस्य यद्विदुः ॥ २६ ॥
विलिख्य धा स्वामिपतद्गुहोद्गतां पवित्रनालां परिपूतशेतनः ।
त्रिलोकयेर्भक्तशिरःसमुद्गतं महः परब्रह्मसमानमद्भुतम् ॥ २७ ॥
रहोनिकुञ्जे शमिनामथ भ्रमन्विश्य वा तीर्थविहारगह्वरे ।
प्रजापदाम्भोर्विधयाजनेष्वपि प्रपश्यसि ब्रह्मपिशाचदेवताः ॥ २८ ॥
यद्यापि माञ्जिष्ठमयं शरीरके मुहुर्व्रजत्यात्मवलक्ष्य निर्मलम् ।
न रामसत्त्वं न भवत्स्वरूपिणं पुनर्धरायामवतारयिष्यसि ॥ २९ ॥
यतं सखे ते सरयूः प्रदास्यति प्रजानिलाशस्य नवावमि च्छति ।
विपश्चरस्यासुनिरोधरोनिभिः किमङ्ग ते साध्यतडिद्ग्रथाविभिः ॥ ३० ॥
किमङ्ग विज्ञानमिदं निषेवसे विमुश्च नास्तिक्यमिदं किलाफलम् ।
किंपश्चिरादभावनयैव शिक्षये समस्तशिक्षागमनस्य ते कलाम् ॥ ३१ ॥
कयापि वैधेयजनस्तु पेटया भुकुंसभयडेन विटैस्तथापरैः ।
इतीव मध्यार्धमयैर्विमोहितो वशेभिरज्ञानतमःसु मज्जति ॥ ३२ ॥
स एव भूमा सकलात्मकोऽयकैरप्रभातापतहिस्स्वनादिभिः ।
यथाकथञ्चिद्विदितः स्फुरच्छ्रियामनर्घ्यविज्ञानमतां महात्मनाम् ॥ ३३ ॥

प्रत्यक्षाज्ञाननिरये सदाऽनात्मविदः स्थितिः ।

सत्यज्ञानात्मके नाके सदैवात्मविदः स्थितिः ॥ २ ॥

सूत्राणि-संनिकृष्टतमं प्रियतमं ज्ञाततममपि तं प्रमादिनो विप्रकृष्टमिवाप्रियमिवाज्ञेयमिवोपेक्षन्ते ५-२-२८ । त आत्मघ्ना असुर्येऽन्धे तमस्यधितिष्ठन्ते ५-२-२९ । तरति शोकमात्मविदभयं च प्राप्नोति ५-२-३० । असतः सन्मृत्योरमृतं तमसो ज्योतिर्गच्छति ५-२-३१ ॥

इति पञ्चमाध्याये द्वितीयाह्निकम् ॥

---

यदीयतत्त्वग्रहणात्कुटुम्बिनः गमेता सिद्धिं जनकादयः पुरा ।
अकर्मसंन्यासपरा ययुः परां परार्ध्यविज्ञानयुता मनीषिणः ॥ ३४ ॥
(अ. ७) वदन्त एतं नरवानराकृतिं निराकृतिं वा न विदन्ति तत्त्वतः ।
उपेक्षमाणाश्च समात्मघातिनः पतन्त्यसुर्ये निरये तमोमये ॥ ३५ ॥
चिदात्मतत्त्वं त्वखिलात्मकं विदन्विशिष्य नान्विष्यति कुत्रचित्कतो ।
तदंशविज्ञानमुखप्रभा-तडित्स्वनोष्मादि च यः परीक्षते ॥ ३६ ॥
तरति शोकमुदस्य भयान्यलं सदसतोमृतमप्यथ मृत्युतः ।
स भजते तमसश्च परं महो व्रजति मङ्क्षु महत्तमसन्मतिः ॥ ३७ ॥

इति पञ्चमाध्याये द्वितीयाह्निकम् ।



# षष्ठाध्याये प्रथमाह्निकम् ।

षष्ठाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति-

गुणाश्रयोऽतिरिक्तोऽस्ति न वा कश्चिद्गुणोत्करात् ।
द्रव्योपलब्धिः प्रत्यक्षा तस्मादस्ति गुणाश्रयः ॥ १ ॥
गुणानामाश्रयः कश्चिन्नातिरिक्तो गुणोत्करात् ।
स्वाश्रयत्वं स्थितं तस्माद्गुणानां वसुधादिवत् ॥ २ ॥

सूत्राणि-न द्रव्यं गुणेभ्यो भिद्यते ६-१-१ । गुणसमुदाये द्रव्यत्वकल्पना सेनावनादिवत् ६-१-२ । आधारो द्रव्यं चेत्तदाधारान्वेषणादनवस्था शेषकूर्मादिवत् ६-१-३ । स्वाधारो गुणसमूहस्तु भूम्यादिवत् ॥ ६-१-४ ॥

---

( अ० १) न सर्वविस्मृततमकुपठशक्तिकः पुरापि वा प्रभवति कश्चित्रद्य वा ।
प्रमादिता न खलु न सर्वगा स्फुटं विभाव्यते भ्रममदमत्सरादिजा ॥१॥
उदयर्थाल्पीदिति चिरतविद्यया विशोधयेद्भ्रमनिकरं पुरातनम् ।
अयं कर्तो कलमिव पूर्वकैर्निकैस्तोयया धनबलबुद्धिसंपदा ॥ २ ॥
न विद्यया क्वचिदपि पूर्णताप्यते पुराद्य वेत्यवगमनं सुविज्ञता ।
पुरातना दधुरिह पूर्णविद्यतामिमां मतिं स्फुटमवगच्छ मूर्खताम् ॥३॥
असंगतं किमपि यदेव दृश्यते चिरन्तनैर्व्यविहितमेवमेव वा ।
विशोधनैरथ परिपूरणैस्तयोर्मतं वरां वहति सुधीरकातरः ॥ ॥ ४ ॥
न पूर्वजादवरजनः प्रभुत्वधीर्भवेत्पुबिपु न शिष्यशक्तिपु ।
स्तुवन्त्यतूनिति कुमतिस्स्वविद्यया विनाशयत्यनयभरेण बन्धुताम् ॥५॥
प्रमादितां सकलजनस्य शंसता परेण तु प्रमदभरेण नृत्यता ।
युगान्तरे किल विदुषां भविष्यतां कर्तेखिलं विनिदधताद्य शस्यते ॥६॥

तृतीयाधिकरणमारचयति-

पृथगर्था इमे द्रव्यगुणांशाः कल्पितास्तु वा ।
पृथगर्था इमे नूनमुपलम्भो हि तादृशः ॥ १ ॥
एकोऽर्थः शब्दमात्रेण द्रव्यत्वादिविकल्पभूः ।
स्वतन्त्रावस्थितिर्नैषामुपलब्धा पृथक् पृथक् ॥ २ ॥

---

अपश्यतां पितृषु समस्तवेदितामतिष्ठतामपि च सुतपरीक्षया ।
पदे पदे निखिलपरीक्षिणां महान्समुद्यमोऽद्य तु परमार्थदर्शिनाम् ॥७॥
प्रवर्तयन्सरणिमिमां परीक्षया विशोधयन्न इह कृतस्थितां भ्रमात् ।
नवं नवं प्रणयति शास्त्रमात्मवान्प्रयात्यसौ पितृऋणनिष्कृतिं [illegible]॥
चिरन्तना निश्चितधियोऽप्यसाधना लघुश्चिरादपि किल नातिविश्रुताम् ।
महात्मनां वहतु महोद्यमोऽपि सन्त्विशेषकृतो ननु कथमल्पभावकः ॥९॥
चिरन्तनैर्कल्पितमद्य तु क्रमाद्वहन्सुधीर्मन्दधिय विततावनम् ।
निरस्य सद्भ्रमनिकरं परीक्षया महीयसीः प्रथयति शास्त्रपद्धतीः ॥१०॥
न भिद्यते गुणनिकराद्गुणी स्फुटं निराश्रयो गुणनिकरो व्यवस्थितः ।
असंगता गुणगुणिभावकल्पनाऽस्ति रच्यते गुणनिकराद्गुणीति कः ॥११॥
न भिद्यते वनमवनीरुहां यथाऽवनीरुहो न च ननु तैर्भिन्नोऽत्कारात् ।
न भिद्यते गुणनिकरात्तथा गुणी गुणाश्रयो वचनविकल्पमात्रजः ॥१२॥
गुणाश्रयो यदि परिकल्प्यतेऽथवा तदाश्रयः पुनरपि किं न कल्प्यते ।
अनाश्रयः स किल निराश्रयस्तदा गुणोत्करो न कथमनाश्रयस्तथा ॥१३॥
गुणक्रियाश्रयपरिकल्पना क्षितेरिवोरगप्रभृतिगतस्य तर्कणा ।
यथा पुनर्धरणिरियं निराश्रया तथा स्फुटं गुणनिकरो निराश्रयः ॥१४॥

सूत्राणि—कर्मगुणविशेषः ६-१-५ । सामान्यं नाममात्रमातिरिक्तं विशेषेभ्यः ६-१-६ । एतेन विशेषः प्रयुक्तः ६-१-७ । अयुतसिद्धयोरभेदात्समवायोपि तथा ६-१-८ ॥

तृतीयाधिकरणमारचयति—

अभावः कश्चिदर्थोस्ति नार्थोयमथवा पृथक् ।
व्यपदेशाद्घटो नास्तीत्यादेरर्थोस्त्यसौ पृथक् ॥ १ ॥
प्रतियोगिस्वरूपत्वान्नाभावोर्थः पृथङ्मतः ।
तद्भिन्नं सर्वमस्तीति तदभावार्थ ईरितः ॥ २ ॥

---

(अ० २) गुणः क्रियेत्यनतिशयाभिदा मता द्वयं यतः परिणतिरेव नेतरत् ।
कुतार्किका निजगदुरर्थमद्वयं गुणक्रियाधिकरणजातिनामभिः ॥ १५ ॥
इहान्विता खलु न जातिरेकिका गुणान्समान्कलयति जातिरित्यलम् ।
समापि सा न हि शिशुता शिशुद्वये पयोम्बुनोर्न मधुरिमा स एव वा ॥१६॥
न जातिरस्त्यतिशयिनी विशेषतो न वा विशेष एष स तां व्यपेक्षते ।
प्रकल्प्य तां तदनु विशेषवादिनो विडम्बनां कणभुगनुश्रिता ययुः ॥१७॥
कुतार्किकैः पृथगिति शब्दमात्रतो गुणक्रियाधिकरणजातिनामभिः ।
उदीरितेष्वतुलमहिम्न्यथाद्वये न वास्तवो भवति भिदेद्वयी यतः ॥१८॥
अतः कथं गुणगुणिकारकक्रियादियोजकः किल समवाय इष्यताम् ।
अपेष्यतेस्य च ननु योजकं परं प्रपद्यसे कथमिति बादरायणः ॥ १९ ॥
(अ०३) किमप्यसच्च हि सकलात्मना यतो न सत्तया किल सकलात्मना स्फुटम् ।
असत्त्वमित्यपरमिदं न भेदतोतिरिच्यते विषययुगादयं न च ॥ २० ॥
चिरन्तनः कणभुगपि स्वशब्दतो न सप्तमं सुमतिरिहार्थमुक्तवान् ।
इहैव वा न च सदिदं यदद्वयं विकल्पयन्त्यहिति भवात्मकं स तत्॥२१॥

सूत्राणि-अभावो भेदः स प्रतियोगिस्वरूपः ६-१-९ । अत्यन्ताभावाद्यं तार्किककल्पना ६-१-१० । अतएव कम्बुग्रीवाद्यभावाभावः ६-१-११ ॥

चतुर्थाधिकरणमारचयति-

तत्त्वानां पञ्चसंख्यत्वं प्रत्नोक्तं संगतं न वा ।
रूपादिगुणयोगेन पञ्चसंख्यैव संगता ॥ १ ॥
घटितत्त्वाज्जलादीनां पञ्चसंख्या त्वसंगता ।
आग्नेयादीनि तत्त्वानि वियद्वा तत्त्वमेककम् ॥ २ ॥

सूत्रे-पृथिव्यादीन्यतत्त्वानि तत्त्वान्तरघटितत्वात् ६-१-१२ नाकाशः शब्दगुणो निर्वायौ तदभावात् ६-१-१३ ॥

पञ्चमाधिकरणमारचयति-

दिक्कालयोरिहार्थत्वं पृथगस्ति न वा पुनः ।
परत्वादिधियां हेतू स्यातामर्थाविमौ पृथक् ॥ १ ॥

---

(अ.४) क्षितिर्जलं शुचिरनिलस्तथा वियच्चेत्यमी विदुरिति तत्त्वपञ्चकम् ।
शुचिर्गुणो वियति विवर्ततेऽखिलं त्रयं परं घटितमनेकतत्त्वकम् ॥ २२ ॥
न चिन्मयं वियदिति तत्त्वमेककं विवर्तते स्वयमिह सततात्मना ।
विवर्तने यदघटितं विभाव्यते वदन्ति तत्त्वमिति बुधास्तदेव तु ॥ २३ ॥
अवायुके वियति न यत्प्रयोगतः स्वनः समुद्भवति ततो न संगता ।
स्वनस्य सा वियदवलम्बकल्पना स्वनः स्फुटं मरुदवलम्ब इष्यते ॥ २४ ॥
अभावतोऽमितमनिलाध्वनः परादपावृताद्विकासततमुपैति न स्वनः ।
इमां वियत्प्रततरङ्गरिङ्गणां स्वनं पुनर्विदुरनिलोर्मिकात्मकम् ॥ २५ ॥

सामान्यवत्रूम्येकस्मिन्कल्पना दिगनेहसोः ।
अतो न पृथगर्थत्वं तयोरिह समञ्जसम् ॥ २ ॥

सूत्रम्–दिक्कालौ सामान्यवत् ६-१-१४ ॥

षष्ठाधिकरणमारचयति—

वयसृष्ट्यादयेऽदृष्टं स्वीकर्तव्यमथो न वा ।
अज्ञातहेतुकार्यार्थं कर्तव्याऽदृष्टकल्पना ॥ १ ॥

सृष्टेरनाद्यनन्तत्वाज्जीवस्यापुनरुद्भवात् ।
अदृष्टकल्पना व्यर्था सर्वं दृश्यात्प्रसिध्यति ॥ २ ॥

सूत्रम्–नादृष्टं व्याघातात् ६-१-१५ ॥

सप्तमाधिकरणमारचयति—

एक आत्माथवानेके परजीवादिनामकाः ।
आत्मानो बहवो दृष्टास्तस्मान्नैक्यमिहात्मनः ॥ १ ॥

---

(अ. ५) न जातिरस्त्यधिकरणाद्यथा पृथग्दिशस्तथा न पृथगनेहसा समम् ।
द्वयोरुद्वयेऽधिकरणभूम्नि कल्पना गुणादिवत्स्किल दिगनेहसोरपि ॥ २६ ॥

(अ. ६) अदृष्टमित्युदितमपूर्वमेव वा पुरातनं सुकृतमथापि दुष्कृतम् ।
तदुद्भवो फलजननो च दैहिकयाथवा स्फुटं मतमसमञ्जसं तु तत् ॥२७॥
न चाव्ययो भवति नचोद्भवस्तथाखिलस्य यज्जगत इहैकदा यतः ।
अतोऽभवत्पुनरगतो न जातुचित क्षित्यथा स्वयमथवापि योजिताः॥२८॥
असंगता प्रभवकथाखिलात्मनो न चापरं जनुरपि सिध्यति स्फुटम् ।
निरर्थया तदलमदृष्टवार्तया तथात्परं जगदुदयाय याचिता ॥ २९ ॥

जीवा बुद्बुदवदस्मात्तस्मादात्मैक एव तु ।
दीर्घतादि घने यद्वत्तद्भेदा इह स्थिताः ॥ २ ॥

सूत्रे-आत्मैको जीवस्य शरीरायुतसिद्धत्वात् ६-१-१६ । तस्मिन्द्रव्यत्वादि घन इवास्तित्वादि ६-१-१७ ॥

अष्टमाधिकरणमारचयति—

मनस्तनोः पृथङ्नो वा पृथगस्त्येव तार्किकैः ।
अणु द्रव्यं हि तत्स्पष्टं प्रतिपन्नं मनीषिभिः ॥ १ ॥
पृथङ्मस्तिष्कनाड्यादेर्मनो नास्तीह किञ्चन ।
मनस्तन्वादितर्को हि प्रकृतिप्रत्ययादिवत् ॥ २ ॥

सूत्रम्-मनो जीववत् ६-१-१८ ॥

नवमाधिकरणमारचयति—

अप्रत्यक्षे विषयस्त्वेणुभिर्जगदिदं न वा ।
सादृष्टैरणुभिः सर्वमप्रत्यक्षेश्वरे भवेत् ॥ १ ॥

---

(अ. ७) सनातनो विभुर्घनात्मकः सदा विचिन्त्यतां वपुर्द्वयमेक आत्मनि ।
इहान्वितास्तनुमनु नाशजन्मिनो न शाश्वताः स्वयमथ जीवबुद्बुदाः ॥ ३० ॥
इहाद्वये घन इव सत्त्वदीर्घता गभीरतादिकमखिलं विलोक्यते ।
गुणक्रियाधिकरणजातिवादिनां विशेष इत्यवधृतिरात्मवेदिनः ॥ ३१ ॥

(अ. ८) यथा तनोः पृथगिह जीव इष्यते न कश्चनैवमपि मनो न वा पृथक् ।
तनूमिमां व्यपदिदिशुः कुतार्किका विलक्षणो द्विपमिव तत्सदात्मना ॥ ३२ ॥

(अ. ९) यथाणवो विचरति तत्र तत्कटा अदृष्टतो दधत इतस्ततो गतिम् ।
विवर्धितं प्रचयमथ क्रमात्ततः प्रयुज्यते द्व्यणुकमुखं महज्जगत् ॥ ३३ ॥
न संभवत्यणुनिकरे जडे न वा न चात्मनि स्फुटमतनो तथाप्यये ।
अदृष्टमित्यहह विकल्पनां मुधावलम्बते स्मरतरमेव तार्किकः ॥ ३४ ॥

प्रत्यक्षतास्ति नभसो भवत्विदं समञ्जसम् ।

नाप्रत्यक्षेऽम्बरे तस्मादणवो विश्वहेतवः ॥ २ ॥

सूत्राणि- नाणवः कारणभूताः ६-१-१९ ।

त आकाश उपलभ्यमाने मत्स्या इव वारिणि ६-१-२० । न शून्यमन्तरे वियतो वस्तुत्वात् ६-१-२१ ॥

दशमाधिकरणमारचयति—

शरीरपञ्जरस्थोऽसौ ज्ञाता भवति वा न वा ।

शरीरपञ्जरस्थः स्याद्बाह्यस्य ज्ञानमावहन् ॥ १ ॥

आत्मन्येव शरीरादि सर्वमेव प्रपश्यति ।

— अबाह्योऽनन्तरस्तस्मात्कृत्स्नो रसघनो मतः ॥ २ ॥

नभोमये वियति झषाश्च वाम्भसि स्फुरन्ति हि पुनः क्षणाणवः परैः ।

प्रकल्पिताः प्रकृतिविदां वरैः परं कियच्चिरं स्फुटि दधतु स्थितिं विदाम् ॥ ३५ ॥

यथा तथा स्थितिमणवो दधत्वमी वहन्ति ते न तु ननु शून्यमन्तरे ।

तदन्तरे वियदिति वस्तु दृश्यते यदात्मकं सकलमुपाश्रितं केवलम् ॥ ३६ ॥

(अ०१०) सह स्थितिर्यत उपलब्धिरनयोस्ततो भिदा न भवति चिन्निवस्तुनोः ।

यदोभयप्रतिनियतोभयस्थितिस्तदोभयोर्भवति भिदा न वस्तुतः ॥ ३७ ॥

चिदात्मनि स्फुरति ततस्तु शाश्वते खिलात्मके ननु विषयेन्द्रियादिकम् ।

न तत्स्थितिर्भवति चिदात्मनः पृथक् समस्ततः पृथगथवा चिदात्मनः ॥ ३८ ॥

चिदात्मके मणिमयशालभञ्जिका-समे मनोमणिमुकुरेषु वस्तुनः ।

इहेष्यते प्रतिफलनं द्वयांशयोः समागमे भवति संनिकर्षतः ॥ ३९ ॥

चिदंशयोर्यदि तु न संनिकृष्टता तदा भवेत्प्रतिफलनं कथं तयोः ।

अतोंऽशयोर्भवति न विप्रकृष्टयोश्चिदात्मनः स्फुटमितरेतरग्रहः ॥ ४० ॥

सूत्राणि—उभयव्याप्तेरभेदपर्यवसायित्वादुपलम्भोपलभ्ययोरभेदः ६-१-२२ । सर्वात्मनः स्वात्मनि विषयेन्द्रियसंनिकर्षोपलम्भः ६-१-२३ । मनोमुकुरेषु तदुपलम्भेषु संनिकृष्टोपलम्भान्तरप्रतिफलनम् ६-१-२४ । संनिकर्षविशेषाभावादयोग्यांशान्तराग्रहः ६-१-२५ । तस्मादिन्द्रियेण द्रव्यादेरुपलम्भोऽनुपलब्धपूर्वस्य ६-१-२६ ॥

एकादशाधिकरणमारचयति—

कार्यकारणभावाद्वा स्वभावाद्वानुमा न वा ।
भवेत्तयोरेकतरात्सर्वत्रैवं हि दृश्यते ॥ १ ॥
कार्यकारणयोरत्रानन्यत्वात्संगतं न तत् ।
उक्तं स्वविषयविज्ञानमनुमायाः प्रयोजकम् ॥ २ ॥

न वस्तुनः पृथगिव स्थितिः स्थितिविवक्षात्मनोऽखिलमुपलब्धिरात्मनि ।
न तस्य तदनुमयपक्षस्थितेर्निजेन्द्रियैर्ग्रहिरिव वस्तुनो ग्रहः ॥ ४१ ॥
(म॰ ११) न केवलादिह सहचारतोऽनुमा न चान्ययोः पैरमपरानुमापकम् ।
धनागमेऽप्यभिमतपादुकस्य वा धनानुमा न च भवपादुकाभृताम् ॥ ४२ ॥
विमृश्य तत्किल कतिचिच्चिरन्तनाः प्रपेदिरे प्रतिनियतां स्थितिं बुधाः ।
स्वभावतः क्वचिदथ कार्यकारण-प्रकर्षतः क्वचिदनुमाश्च द्विधा ॥४३॥
न शिंशपा त्यजति तरुस्वभावतामतस्तरोर्वदति मुखानसाविति ।
चिरन्तनो वदति समस्तमेव न तत्र जातिरस्त्यतिशायिनी विशेषतः ॥ ४४ ॥
चर्चाक्षितिघटकयवस्य वा परा वदन्ति तां कतिचन कारणाख्यया ।
अमुष्य वा स्थितिरिह कार्यरूपतः परे विदुः पुनरिदमेव कारणम् ॥ ४५ ॥

सूत्राणि—नानुमानं सहचारात् ६-१-२७ । कार्यकारणभावात्स्वभावाद्वा ६-१-२८ । स्वभावो नाममात्रम् ६-१-२९ । कारणसंज्ञावस्थाविशेषः ६-१-३० । कारणकारणत्वादन्यथासिद्धमन्यत् ६-१-३१ । तस्मादुपादानमात्रम् ६-१-३२ । तदनन्यत्वमौपनिषदं बादरायणः ६-१-३३ । नाविर्भावतिरोभावौ योगवियोगौ तु सन्निवेशान्तरे ६-१-३४ । कार्यपरीक्षया कारणनिर्णयश्चेदसंनिकृष्टावयवानुमानम् ६-१-३५ । अवयविन उपलब्धिरिति चेन्न तस्यावयवसमूहानतिरेकात् ६-१-३६ ॥

अपेक्ष्यते किमपि न कार्यसिद्धये परं यतस्त्रिविध मुधा त्रिधा विदुः ।
निमित्तमप्यथ समवायि कारणं कुतार्किकास्तदसमवायि चापरम् ॥४६॥
यदेककं किल समवायिकारणं प्रतिष्ठितं ध्रुवमिह कार्यसिद्धये ।
चिदात्मिकां प्रकृतिमिमां निमित्तमप्यपि स्फुटं प्रवदति बादरायणः ॥४७॥
न कार्यतोऽपि च विभिनत्ति कारणं चिरस्तयोश्चविवर प्रकृतां स्फुटाम् ।
न कार्यतस्तत इह कारणानुमा गवेष्यतामितरतोऽनुमाश्रयः ॥ ४८ ॥
ह्रुहान्यथा भवति च संनिवेशने वियोजनं घटनमथोभयं तु वा ।
तिरोहितिर्न भवति नाप्युदयो नवस्य कस्यचिदितरस्य वस्तुनः ॥४९॥
न कार्यतस्तत इह कारणानुमा यतोऽन्तरः सविधगतास्परस्य वा ।
धुवेः स्फुटं भवति कणांश एककः समं ततोऽनुमितमतः यव धूमतः ॥ ५० ॥
कुतार्किका अवयविनो नवस्य यद्ग्रहं विदुः स्फुटमसमञ्जसं तु तत् ।
विभिन्नतेऽवयवसमूहतो यतो न किंचिदप्यवयविनामभाजनम् ॥ ५१ ॥

द्वादशाधिकरणमारचयति—

दिव्याऽस्ति शक्तिर्योग्यादेर्न वास्त्येव यतस्त्वयम् ।

अप्रत्यक्षानुमायोग्यं जानन्ति स्म महौजसः ॥ १ ॥

न प्रत्यक्षानुमायोग्या सा शक्तिर्नास्त्यतः स्फुटम् ।

मूढा गुणातिक्रमाद्यैरेताः कुर्वन्ति कल्पनाः ॥ २ ॥

सूत्रे-न योगिप्रत्यक्षमन्यादृशम् ६-१-३७ । विशेषोत्प्रेक्षागुणविलङ्घनमध्यमविपर्यासाद्याहेत्वाभासप्रयोजकाबाध्याः ६-१-३८ ॥

इति षष्ठाध्याये प्रथमाह्निकम् ॥

---

(श्लो० १२) न योगिनामपि ननु दिव्यशक्तितापधानयानपि नहि दृष्टमागतम् ।
पुरः स्थितं स्वातिशयं निरीक्षते यथाऽक्षवानपि पुरोऽपि पश्यति ॥ ५२ ॥
अनेन तत्स्फुटमपि दिव्यशक्तिभिर्विभाव्यते निखिलमनन्ययोगतः ।
इतोऽन्यथा विपदर्थविकल्पना मूढाशये दधति न पारमार्थिकाः ॥ ५३ ॥

विशेषस्याग्रेसा स्थितिमति तु सामान्यविधया
गुणं वातिक्रम्यानुमितिरथ संख्यानवधृतिः ।
इमे तर्काभासाः स्फुटमनुदिताः पक्षविधिभि-
र्मुहुर्विघ्नं लोके विदधति धियां विभ्रममलम् ॥ ५४ ॥
अतः स्वर्गारस्त्रीसुरतर्कविशेषादि कलयं-
विचारज्ञानां दिव्यं करणपटुनां पक्षपदम् ॥
शिशुर्मुग्धो दग्धैरतिशठविडालव्रतवकैः
कृतार्थीरात्कष्टं व्यसनमनुधावत्यविदितम् ॥ ५५ ॥

इति षष्ठाध्याये प्रथमाह्निकम् ।

# षष्ठाध्याये द्वितीयाह्निकम् ।

षष्ठाध्याये द्वितीयाह्निके प्रथमाधिकरणमारचयति—

प्रामाण्यमाप्तवचसामर्थवादेऽस्ति वा न वा ।
ऋष्यादयो हि सर्वज्ञाः श्रद्धेयवचसः सदा ॥ १ ॥
धर्मज्ञा ऋषयः प्राञ्चः सर्वज्ञो नास्ति कश्चन ।
अव्याहते विधावेव तस्मादाप्तोऽनुगम्यते ॥ २ ॥

सूत्राणि-शब्दो नार्थवादे न वा व्याहते विधौ ६-२-१ । तस्मादव्याहते विधाविति नियमो वाच्यः ६-२-२ । तदवचनं दोषोऽक्षचरणादीनाम् ६-२-३ । पूर्वजाः साक्षात्कृतधर्माणो न सर्वज्ञाः ६-२-४ ॥

---

पृ. १ ) विधिषु केवलमाप्तगिरः प्रमा यदि विधेर्विषयः सुसमञ्जसः ।
न पुनरर्थवचस्त्वपरीक्षया भवति सत्यमसत्यमथापि वा ॥ १ ॥
तुलमिव त्रिगुणं खलु षट्समं द्विगुणमेव चतुःसमता मता ।
इति न वस्तुविनिश्चितये जनः परमते रमते ऋजुकोऽपि सन् ॥ २ ॥
नियतमाप्तगिरामनुवादनं विधिवये विदधीत समञ्जसे ।
अनियमोऽथ पदार्थविवेकतो विनियमस्त्वयमस्त्वनयोर्द्वयाम् ॥ ३ ॥
विदितधर्मपथा ऋषयोऽभवन्निति वचः स्मर यास्कमुनेः सखे ।
अपि न सर्वविदः पुरुषाः परं जिनमते न मते श्रुतिसेविनाम् ॥ ४ ॥
न पुनरल्पविदोऽपि पितुर्विधीन् गणयन्ति सुताः पितृवत्सलाः ।
गतभयोऽपि हि वस्तुपरीक्षणे विनयतो न पदोऽल्पमपि स्खलेत् ॥ ५ ॥

